विद्वद्वर-ईश्वरकृष्णप्रणीता

# सांख्यकारिका ।

श्रीगौडपादाचार्यविरचितभाष्यसमेता ।

काशीस्थवेदविद्यालयाध्यापक-न्यायोपाध्याय-

पं० ढुण्ढिराजशास्त्रिणा संस्कृता ।

काशीस्थ-बनारससंस्कृतसीरीजाध्यक्षेण

श्रीकृष्णदासगुप्तेन

निजव्ययतो मुद्रयित्वा प्रकाशिता ।

वाराणस्यां

विद्याविलासयन्त्रालये

बाबू श्रीजयकृष्णदासगुप्त द्वारा मुद्रिता ।



सम्वत् १९७९ ।

विद्वद्वर-ईश्वरकृष्णप्रणीता

# सांख्यकारिका ।

श्रीगौडपादाचार्यविरचितभाष्यसमेता ।

काशीस्थवेदविद्यालयाध्यापक-न्यायोपाध्याय-
पं० ढुण्ढिराजशास्त्रिणा संस्कृता ।

काशीस्थ-बनारससंस्कृतसीरीजाध्यक्षेण
श्रीकृष्णदासगुप्तेन
निजव्ययतो मुद्रयित्वा प्रकाशिता ।

वाराणस्यां
विद्याविलासयन्त्रालये
बाबू श्रीजयकृष्णदासगुप्त द्वारा मुद्रिता ।



सम्वत् १९७९ ।

# उपोद्घातः।

विदितमेवैतच्छास्त्राम्बुध्यवगाहनशीलानान्तत्र-भवतां विदुषां यत्–'महर्षिप्रवराऽऽदिमुनिकपिलप्रणीतं सांख्यशास्त्रमपि—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश॥

इति मनुस्मृत्युक्तन्यायविस्तरपदेन वैशेषिकयोगादिवत् परिगृहीतं, भगवतापि श्रीकृष्णचन्द्रेण—

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।
एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति॥

इत्यादिभगवद्गीतावाक्येष्वुररीकृतं, "तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपापैः" इत्यादिश्वेताश्वतरोपनिषद्ग्रन्थश्च परमपुरुषार्थप्रदतत्त्वज्ञानजनकत्वेन सकलशास्त्रशिरोमण्डनतया वरीवर्तत इति'।

स च महर्षिः कपिलो ब्रह्मपुत्र आसीदिति तु—

सनकश्च सनन्दश्च तृतीयश्च सनातनः।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा॥
सप्तैते ब्रह्मणः पुत्राः—

इत्यादि वाक्येषु सुव्यक्तमेव। तथाऽयमेव—

शुक्लः कृष्णगतिर्देवो यो बिभर्ति हुताशनम्।
अकल्मषः कल्मषाणां कर्ता क्रोधाश्रितस्तु सः॥
कपिलं परमर्षिञ्च यं प्राहुर्यतयः सदा।
अग्निः स कपिलो नाम सांख्ययोगप्रवर्तकः॥

इत्यादिमहाभारतवाक्येष्वग्नेरवतार इति सूचितम्। भागवतेप्यस्य कर्दमऋषेर्देवहूत्यामवतारत्वेनाविर्भावः स्फुटतया प्रतिपादितः। सांख्यप्रवचनभाष्ये तु "नारायणः कपिलमूर्तिरशेषदुःखहानाय जीवनिवहस्य नमोऽस्तु तस्मै" इत्युक्तौ नारायणावतारोऽयमित्युक्तम्। सर्वथाऽप्यस्य सांख्यशास्त्रप्रणेतुरुपनिषत्काल इति निर्विवादम्।

तत्प्रणीतं सांख्यशास्त्रञ्च सूत्रषडध्यायी समाससूत्रञ्चेति द्विविधमुपलभ्यते। द्विविधस्याप्यस्य स एक एव कर्तेति भाष्यकारमतम्। द्वाविंशतिसूत्रात्मकं समाससूत्रं नारायणावतारेण भगवता कपिलेन निर्मितं, विस्तृता षडध्यायी च वैश्वानरावतारेणेति वृद्धाः।

द्विविधान्यपि सूत्राण्यतिसंक्षिप्तदुरूहाशयपदानि सामान्यजनोपकाराक्षमाणि पठद्भिराधुनिकैः सुकुमारमतिभिर्बालैः शास्त्रतत्त्वं याथातथ्येन कदाचिन्नावधार्येतेति तेषु कारुण्यमादधानः सम्यग्विदितकपिलाशयस्तच्छिष्यपरम्पराप्राप्तशास्त्ररहस्यः श्रीमानीश्वरकृष्णाभिधानो महामनाः सांख्यकारिकाप्रबन्धे कापिलसूत्राणामुक्तद्विप्रकाराणां कृत्स्नं सारभूतमर्थं क्रमेणैकीकृत्य प्रदर्शयामास। तथाह्यत्र—

प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता।
पारार्थ्यञ्च तथानैक्यं वियोगो योग एव च॥
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश।
विपर्ययः पञ्चविधस्तथोक्ता नव तुष्टयः॥

T

करणानामसामर्थ्यमष्टाविंशतिधा मतम् ।

इति षष्ठिः पदार्थानामष्टाभिः सह सिद्धिभिः ॥

इति राजवार्तिकोक्ताः षष्ठिपदार्थाः साकल्येनोपवर्णिताः । तत्र तावत्प्रकृतिपुरुषविवेकोपदेशाय मोक्षफलकाय प्रवृत्तं शास्त्रं प्रथमं चेतनाचेतनभेदेन पदार्थद्वैविध्यं सूचयाम्बभूव । तत्र चेतनाः पुरुषा जन्मादिव्यवस्थाऽन्यथानुपपत्त्या बहवः । प्रकृत्यादयस्त्रयोविंशाः संहतपरार्था अचेतनाश्च । तथापि पुरुषस्य भोगापवर्गार्थं वत्सविवृद्ध्यर्थं क्षीरमिव प्रवर्तन्ते । तत्प्रवृत्तौ च मिथ्याज्ञानजन्यवासनासहकृता पुरुषेण सह संयोगं सम्पादयन्ती अनाद्याविद्यैव हेतुः । पुरुषसंयुक्ता च साम्यावस्थापन्नगुणत्रयात्मिका प्रकृतिः प्रधानापरपर्याया स्वकार्यमहत्तत्त्वाकारेण परिणमते । महत्तत्वश्च निश्चयात्मकवृत्तिविशिष्टमन्तःकरणमेव । तच्चेदं ममानेनाहं कार्यं निष्पादयामीत्येवमहङ्कारात्मकवृत्तिविशिष्टान्तरकरणरूपाहङ्काराकारेण परिणमते । सोऽपि सूक्ष्मभूतशब्दादिपञ्चतन्मात्राकारेण परिणाममाप्नोति । तानि च श्रोत्रत्वक्नयनरसनाजिह्वाख्यपञ्चज्ञानेन्द्रिय–वाक्पाणिपादपायूपस्थाख्यपञ्चकर्मेन्द्रिय–सङ्कल्पविकल्पात्मकवृत्तिकमनोरूपेण आकाशादिमहाभूताकारेण च परिणमन्ते । त एते चतुर्विंशतिपदार्थाः श्रुतिस्मृत्युपदिष्टाः प्रसिद्धा एव । तेभ्य एव च भौतिकब्रह्माण्डचतुर्विधप्राणिदेहादीनामुत्पत्तिः । प्रकृतिश्चैवं भूयोभूयः स्वव्यापारान् पुरुषाय प्रदर्श्य पुनः पुनर्भुञ्ज्य-

मानेषु तेषु क्रमशः पुरुषस्य वैराग्यमुत्पाद्यात्मात्मका-र्येभ्यः पुरुषस्य विवेकज्ञानं जनयित्वा दृष्टात्मविवेक-म्पुरुषम्प्रति स्वव्यापारदर्शनेन कृतकृत्यतया निवर्तते। तन्निवृत्तौ च तत्कार्यनिखिलपदार्थव्यापारनिवृत्ति-रित्यतः सकार्यप्रकृतिवृत्तिनिवारणाय प्रयत्नः का-र्यः। तन्निवृत्तिश्च विवेकज्ञानमात्रसाध्येति विवेकज्ञा-नसाधनायेदं शास्त्रं प्रवृत्तम्। विवेकश्च वस्तुनो यथा-र्थरूपज्ञानम्। तत्र पुरुषस्य निःसङ्गतया क्रियाशून्य-तया चापरिणामित्वेन कर्तृत्वाभावात् प्रकृतिकार्यं बुद्धिरेव कर्त्री। कृतिसामानाधिकरण्येनैव तत्फलस्य सुखदुःखादेः प्रतीतेस्तेषामपि तन्निष्ठतैव। पुरुषे तु प्रधानकार्यबुद्धेश्चिदात्मनि प्रतिबिम्बात् दुःखादेर-पि तत्र प्रतिबिम्बनम्। तेन च पुरुष उपतप्यते बुद्धे-र्दुःखनिवृत्तौ नैव तस्योपताप इत्यतः प्रतिबिम्बरूप-दुःखभोक्तृत्वेनात्मानं जानन् पुरुषः सन्तप्यमान इव भवति। ततश्च प्रकृतेर्भिन्नतया तत्कार्यसुखादिशू-न्यतया ज्ञातः पुरुषः प्रतिबिम्बाकारैर्दुःखैर्न सम्बध्यते इत्येवं प्रकृत्यादीनां त्रयोविंशानां पुरुषस्य चासा-धारणधर्मविशेषकथनद्वारा तयोर्विवेकज्ञानोपयोग्यु-पदेशायैवेदं प्रवृत्तम्। यथा च तयोर्विवेकस्तथा शास्त्रे तन्मूलकेऽस्मिन्द्वासप्ततिकारिकात्मके प्रबन्धे चाख्या-यिकापवादनिराकरणवर्जमीश्वरकृष्णेन प्रस्फुटितम्।

अयञ्च महानुभावः कतममन्वयं जनपदञ्चालञ्च-कारेति न कुत्राप्यधुनापि निर्णीतं किन्तु श्रीशङ्करा-चार्येभ्योऽतीवप्राचीन इति विज्ञायते शारीरकमीमां-

T

साभाष्ये तैस्तदीयकारिकायाः समुल्लेखादाचार्याणां परमगुरुभिः गौडपादचार्यैः कृतव्याख्यानत्वाच्चेति । सांख्यकारिकायाश्चाखिलव्याख्यानेषु प्रथमन्तावद्गौडपादाचार्यकृतं भाष्यमेव । गौडपादाचार्याश्च शङ्कराचार्यस्य परमगुरवः । तथा च गोस्वामिमण्डले सायङ्काले पुष्पाञ्जलिप्रदानपूर्वकप्रणामाञ्जलिकरणसमयपठ्यमानमभियुक्तपद्यद्वयम्—

नारायणं पद्मभुवं वसिष्ठं
शक्तिञ्च तत्पुत्रपराशरञ्च ।
व्यासं शुकं गौडपदं महान्तं
गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥
श्रीशङ्कराचार्यमथास्य पद्म-
पादञ्च हस्तामलकं च शिष्यम् ।
तं तोटकं वार्तिककारमन्या-
नस्मद्गुरून् सन्ततमानतोऽस्मि ॥ इति ।

अयञ्चोदन्तः श्रुतिसमवचनाद्वृद्धजाताच्छ्रूयते· "कदाचिच्छङ्कराचार्यो माण्डूक्योपनिषदर्थमपिप्रच्छिषुर्गौडपादाचार्यमुपाससाद । हिमालयगुहामध्यासीनो गौडपादाचार्यश्च शङ्करस्वामिनो योग्यतां बुभुत्सुः विष्णुसहस्रनामपुस्तकं व्याख्यासनाथं कर्तुं तस्मै प्रायच्छत् । स च शङ्करस्वामी गुर्वनुज्ञां सादरं प्रतिपालयन्नलौकिकप्रतिभाप्रदर्शकं विष्णुसहस्रनामभाष्यं प्रणीय गौडपादाचार्यचरणाम्बुजयोः समर्पितवान् । तेन चावलोक्य भाष्यपुष्पाञ्जलिमतिप्रसन्नेन माण्डूक्योपनिषद्व्याख्यास्वरूपा स्वोपनिबद्धा कारिका

शाङ्करस्वामिने दत्त्वा भणितम् यदनयैव माण्डूक्योपनिषदर्थस्ते सम्यक् स्फुरिष्यतीति"।

यद्यपि चेयं सांख्यकारिका सर्वतन्त्रस्वतन्त्र-निखिलशास्त्रव्याख्यानचातुरीदक्ष-विद्वद्वर-निखिलभूमण्डलीपण्डितगणजेगीयमानयशस्काण्डेन वाचस्पतिमिश्रेण कृतव्याख्यासनाथत्वान्न दुरवगाहाभिप्राया नापि चाध्ययनाध्यापनयोर्लुप्तप्रचारा, प्रत्युत सश्लाघमधुनाप्यध्येतुमध्यापयितुञ्चाद्रियमाणैव तथापि गौडपादाचार्यकृतं भाष्यमतिप्राचीनतयाऽत्यादरार्हमित्यवबुध्य काशीस्थसुप्रसिद्धपण्डितप्रकाण्डत्रिपाठ्युपाह्ववेचनरामशर्मणा सुगमया चन्द्रिकाख्यया टीकया भाष्येण च साकं वाराणसीयप्रसिद्धसंस्कृतसीरिजाभिधानपुस्तकश्रेण्यामसुद्रि।

तस्याश्च प्रथमसंस्करणे सफलप्रयत्नेनोक्तसीरिजपुस्तकालयाध्यक्षेण विद्याविनोदरसिकेन श्रीकृष्णदासमहोदयेन विहितप्रेरणोऽहमस्य द्वितीयसंस्करणशोधने प्रवृत्तोऽस्मि। किन्तु मुद्रितपुस्तकादृते नान्यच्छोधनार्थमुपलब्धं पुस्तकं मयेति यत्किञ्चिदेतच्छोधने प्रमादमतिमान्द्यादिकृतं कल्मषन्तदलक्षीकृत्य मामकीनं परिश्रममवन्ध्यं करिष्यन्ति विद्वांस इति कृताञ्जलिः प्रार्थयते—

विदुषामनुचरः

ढुण्ढिराजशास्त्री।

T/

सभाष्यसांख्यकारिकाया विषय-

# सूचीपत्रम् ।



T

T

T

T

विषयाणां सङ्कलनेन संख्या १६८ ।


पुस्तक प्राप्तिस्थानम् । — कृष्णदास गुप्त— ४०।५ ठठेरी बाजार बनारस सिटी ।

# शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृ० | पं० |
|---|---|---|---|
| एकान्तासतोऽभान्तवात् | एकान्तासन्ततोऽभावात् | २ | १९ |
| पिषया | विषया | ५ | १३ |
| विहाण | विपाण | ६ | ८ |
| नायं | चायं | १६ | १८ |
| प्रतिगणा | प्रतिगुणा | १९ | १२ |
| प्रत्यपभोगं | प्रत्युपभोगं | ३५ | १७ |
| गणवैषम्य | गुणवैषम्य | ४२ | १४ |
| भदाः | भेदाः | ,, | २१ |

इति शुद्धिपत्रम् ।

---

T

# सांख्यकारिका

## गौडपादाचार्यविरचितभाष्यसमेता ।

श्रीगणेशाय नमः ।

कपिलाय नमस्तस्मै, येनाविद्योदधौ जगति मग्ने ।
कारुण्यात् सांख्यमयी, नौरिव विहिता प्रतरणाय ॥ १ ॥
अल्पग्रन्थं स्पष्टं, प्रमाणसिद्धान्तहेतुभिर्युक्तम् ।
शास्त्रं शिष्यहिताय, समासतोऽहं प्रवक्ष्यामि ॥ २ ॥

**दुःख(१)त्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ ।**
**दृष्टे सापार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥**

दुःखत्रयेति । अस्या आर्याया उपोद्घातः क्रियते । इह भगवान् ब्रह्मसुतः कपिलो नाम, तद्यथा—

"सनकश्च सनन्दनश्च(२) तृतीयश्च सनातनः ।
आसुरिः कपिलश्चैव वोढुः पञ्चशिखस्तथा ॥
इत्येते ब्रह्मणः पुत्राः सप्त प्रोक्ता महर्षयः ॥"

कपिलस्य सहोत्पन्नानि धर्मो ज्ञानं वैराग्यमैश्वर्यं चेति । एवं स उत्पन्नः सन्, अन्धे तमसि मज्जज्जगदालोक्य संसारपारम्पर्येण सत्कारुण्यो जिज्ञासमानाय आसुरिसगोत्राय ब्राह्मणायेदं पञ्च-

---

(१) यद्यपि दुःखममङ्गलं तथापि तत्परिहारार्थत्वेन तदपघातो मङ्गलमेवेति, दुःखशब्दोपादानं ग्रन्थादौ न दोषायेति मूलकाराशयः ।

(२) सनन्दश्चेति पाठान्तरम् ।

विंशतितत्त्वानां ज्ञानमुक्तवान्, यस्य ज्ञानाद्दुःखत्रयो भवति—

"पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे वसेत्।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥"

तदिदमाहुः—दुःखत्रयाभिघाताज्जिज्ञासेति। तत्र दुःखत्रयम्, आध्यात्मिकम्—आधिभौतिकम्—आधिदैविकं चेति। तत्राध्यात्मिकं द्विविधं, शारीरं—मानसं चेति। शारीरं वातपित्तश्लेष्मविपर्ययकृतं ज्वरातिसारादि, मानसं प्रियवियोगाप्रियसंयोगादि। आधिभौतिकं—चतुर्विधभूतग्रामनिमित्तं मनुष्यपशुमृगपक्षिसरीसृपदंशमशकयूकामत्कुणमत्स्यमकरग्राहस्थावरेभ्यो जरायुजाण्डजस्वेदजोद्भिज्जेभ्यः सकाशादुपजायते। आधिदैविकम्—देवानामिदं दैवम्, दिवः प्रभवतीति वा दैवम्, तदधिकृत्य यदुपजायते शीतोष्णवातवर्षाशनिपातादिकम्। एवं यथादुःखत्रयाभिघाताज्जिज्ञासा कार्या, क्व—तदपघातके हेतौ, तस्य दुःखत्रयस्याभिघातको योऽसौ हेतुस्तत्रेति। दृष्टे साऽपार्था चेत्, दृष्टे हेतौ दुःखत्रयाभिघातके सा जिज्ञासाऽपार्था चेद्यदि। तत्राध्यात्मिकस्य द्विविधस्याप्यायुर्वेदशास्त्रक्रियया प्रियसमागमाप्रियपरिहारकटुतिक्तकाथादिभिर्दृष्ट एवाध्यात्मिकोपायः। आधिभौतिकस्य रक्षादिनाऽभिघातः। दृष्टे साऽपार्था चेदेवं मन्यसे, न, एकान्तात्यन्ततोऽभावात्, यत एकान्ततोऽवश्यमत्यन्ततो नित्यं दृष्टेन हेतुनाभिघातो न भवति; तस्मादन्यत्रैकान्तात्यन्ताभिघातके हेतौ जिज्ञासा विविदिषा कार्येति॥ १॥

**दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः।**
**तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्॥ २॥**

यदि दृष्टादन्यत्र जिज्ञासा कार्या, ततोऽपि नैव। यत आनु-

अविक्रो हेतुर्दुःखत्रयाभिघातकः । अनुश्रूयत इत्यनुश्रवस्तत्र भव आनुश्रविकः स चागमात् सिद्धः, यथा—

"अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान् ।
किं नूनमस्मांस्तृणवदरातिः किमु धूर्तिरमृतमर्त्यस्य ॥"

कदाचिदिन्द्रादीनां देवानां कल्प आसीत्, कथं वयममृता अभूमेति विचार्य यस्माद्वयमपाम सोमं पीतवन्तः सोमं तस्मादमृता अभूम अमरा भूतवन्त इत्यर्थः । किञ्च, अगन्म ज्योतिः, गतवन्तो लब्धवन्तो ज्योतिः स्वर्गमिति । अविदाम देवान्, दिव्यान् विदितवन्तः । एवं च किं नूनमस्मांस्तृणवदरातिः, नूनं निश्चितं किमरातिः शत्रुरस्मान् तृणवत् करोति । किमु धूर्तिरमृतमर्त्यस्य, धूर्तिर्जरा हिंसा वा किं करिष्यति अमृतमर्त्यस्य । अन्यच्च वेदे श्रूयते आत्यन्तिकं फलं पशुवधेन—

"सर्वांल्लोकाञ्जयति मृत्युं तरति पाप्मानं तरति ।
ब्रह्महत्यां तरति यो योऽश्वमेधेन यजते ॥" इति ।

ऐकान्तात्यन्तिके एवं वेदोक्ते अपार्थैव जिज्ञासा, इति न । उच्यते—दृष्टवदानुश्रविक इति । दृष्टेन तुल्यो दृष्टवत्, योऽसावानुश्रविकः, कस्मात् स दृष्टवत्, यस्मात् अविशुद्धिक्षयातिशययुक्तः । अविशुद्धियुक्तः पशुघातात्, तथा चोक्तम्—

"षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि ।
अश्वमेधस्य वचनादूनानि पशुभिस्त्रिभिः ॥" इति ।

इत्थं यद्यपि श्रुतिस्मृतिविहितो धर्मस्तथापि मिश्रीभावादविशुद्धियुक्त इति । तथा—

"बहूनीन्द्रसहस्राणि देवानां च युगे युगे ।
कालेन समतीतानि कालो हि दुरतिक्रमः ॥" इति ।

एवमिन्द्रादिनाशात् क्षययुक्तः। तथाऽतिशयो विशेषस्तेन युक्तः। विशेषगुणदर्शनादितरस्य दुःखं स्यादिति। एवमानुश्रविकोऽपि हेतुर्दृष्टवत्। कस्तर्हि श्रेयानिति चेत्, उच्यते—तद्विपरीतः श्रेयान्, ताभ्यां दृष्टानुश्रविकाभ्यां विपरीतः श्रेयान् प्रशस्यतर इति, अविशुद्धिक्षयातिशयायुक्तत्वात्। स कथमित्याह—व्यक्ताव्यक्तज्ञविज्ञानात्। तत्र व्यक्तं महदादि—बुद्धिरहङ्कारः पञ्च तन्मात्राण्येकादशेन्द्रियाणि पञ्च महाभूतानि। अव्यक्तं प्रधानम्। ज्ञः पुरुषः; एवमेतानि पञ्चविंशतितत्त्वानि व्यक्ताव्यक्तज्ञाः कथ्यन्ते। एतद्विज्ञानाच्छ्रेय इति। उक्तं च "पञ्चविंशतितत्त्वज्ञ" इत्यादि॥ २॥

अथ व्यक्ताव्यक्तज्ञानां को विशेष इत्युच्यते—

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥ ३॥**

मूलप्रकृतिः प्रधानम्, प्रकृतिविकृतिसप्तकस्य मूलभूतत्वात्, मूलं च सा प्रकृतिश्च मूलप्रकृतिः—अविकृतिः अन्यस्मान्नोत्पद्यते, तेन प्रकृतिः कस्य चिद्विकारो न भवति। महदाद्याः प्रकृतिविकृतयः सप्त। महत्तत्त्वं बुद्धिः, बुद्ध्याद्याः सप्त; बुद्धिः १ अहङ्कारः २ पञ्च तन्मात्राणि ५ एताः सप्त प्रकृतिविकृतयः। तद्यथा—प्रधानाद्बुद्धिरुत्पद्यते तेन विकृतिः प्रधानस्य विकार इति, सैवाहङ्कारमुत्पादयति, अतः प्रकृतिः। अहंकारोऽपि बुद्धेरुत्पद्यत इति विकृतिः, स च पञ्च तन्मात्राण्युत्पादयतीति प्रकृतिः। तत्र शब्दतन्मात्रमहंकारादुत्पद्यत इति विकृतिस्तस्मादाकाशमुत्पद्यत इति प्रकृतिः। तथा स्पर्शतन्मात्रमहंकारादुत्पद्यत इति विकृतिस्तदेवं वायुमुत्पादयतीति प्रकृतिः। गन्धतन्मात्रमहंकारादुत्पद्यत इति विकृतिस्तदेवं पृथिवीमुत्पादयतीति प्रकृतिः। रूपतन्मात्रमहंकारादुत्पद्यत इति विकृतिस्तदेवं तेज

उत्पादयतीति प्रकृतिः। रसतन्मात्रमहंकारादुत्पद्यत इति विकृतिस्तदेवमप उत्पादयतीति प्रकृतिः। एवं महदाद्याः सप्त प्रकृतयो विकृतयश्च। षोडशकस्तु विकारः, पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाण्येकादशं मनः पञ्च महाभूतान्येष षोडशको गणो विकृतिरेव, विकारो विकृतिः। न प्रकृतिर्न विकृतिः पुरुषः॥ ३॥

एवमेषां व्यक्ताव्यक्तज्ञानां त्रयाणां पदार्थानां कैः कियद्भिः प्रमाणैः केन कस्य वा प्रमाणेन सिद्धिर्भवति। इह लोके प्रमेयवस्तु प्रमाणेन साध्यते यथा—प्रस्थादिभिर्व्रीह्यस्तुलया चन्दनादि। तस्मात् प्रमाणमभिधेयम्—

दृष्टमनुमानमाप्तवचनं च सर्व्वप्रमाणसिद्धत्वात्।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि॥ ४॥

दृष्टं, यथा—श्रोत्रं त्वक् चक्षुर्जिह्वा घ्राणमिति पञ्च बुद्धीन्द्रियाणि, शब्दस्पर्शरूपरसगन्धा एषां पञ्चानां पञ्चैव पिषया यथासंख्यम्। शब्दं श्रोत्रं गृह्णाति, त्वक् स्पर्शं, चक्षू रूपं, जिह्वा रसं, घ्राणं गन्धमिति; एतद्दृष्टमित्युच्यते प्रमाणम्। प्रत्यक्षेणानुमानेन वा योऽर्थो न गृह्यते स आप्तवचनाद् ग्राह्यः, यथा—इन्द्रो देवराजः, उत्तराः कुरवः, स्वर्गेऽप्सरसः, इत्यादि। प्रत्यक्षानुमानाग्राह्यमप्याप्तवचनाद्गृह्यते। अपिचोक्तम्—

"आगमो ह्याप्तवचनमाप्तं दोषक्षयाद्विदुः।
क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसंभवात्॥
स्वकर्मण्यभियुक्तो यः सङ्गद्वेषविवर्जितः।
पूजितस्तद्विधैर्नित्यमाप्तो ज्ञेयः स तादृशः"॥

एतेषु प्रमाणेषु सर्वप्रमाणानि सिद्धानि भवन्ति। षट् प्रमाणानि जैमिनिः। अथ कानि तानि प्रमाणानि? अर्थापत्तिः—संभवः—

अभावः—प्रतिभा—ऐतिह्यम्—उपमानं—चेति षट् प्रमाणानि। तत्रार्थापत्तिर्द्विविधा, दृष्टा—श्रुता—च। तत्र दृष्टा, एकस्मिन् पक्षे आत्मभावो गृहीतश्चेदन्यस्मिन्नप्यात्मभावो गृह्यत एव। श्रुता, यथा—दिवा देवदत्तो न भुङ्क्ते अथ च पीनो दृश्यते अतोऽवगम्यते रात्रौ भुङ्क्त इति। संभवो यथा—प्रस्थ इत्युक्ते चत्वारः कुडवाः संभाव्यन्ते। अभावो नाम—प्रागितरेतरात्यन्तसर्वाभावलक्षणः। प्रागभावो यथा—देवदत्तः कौमारयौवनादिषु। इतरेतराभावः पटे घटाभावः। अत्यन्ताभावः खरविषाणवन्ध्यासुतखपुष्पवदिति। सर्वाभावः प्रध्वंसाभावो दग्धपटवदिति, यथा—शुष्कधान्यदर्शनाद्वृष्टेरभावोऽवगम्यते। एवमभावोऽनेकधा। प्रतिभा यथा—

"दक्षिणेन च विन्ध्यस्य सह्यस्य च यदुत्तरम्।
पृथिव्यामासमुद्रायां स प्रदेशो मनोरमः" ॥

एवमुक्ते तस्मिन् प्रदेशे शोभना गुणाः सन्तीति प्रतिभोत्पद्यते प्रतिभा च जानतां ज्ञानमिति। ऐतिह्यं यथा—ब्रवीति लोको यथात्र वटे यक्षिणी प्रवसतीत्येवैतिह्यम्। उपमानं यथा—गौरिव गवयः समुद्र इव तडागः। एतानि; षट् प्रमाणानि त्रिषु दृष्टादिष्वन्तर्भूतानि। तत्रानुमाने तावदर्थापत्तिरन्तर्भूता। संभवाभावप्रतिभैतिह्योपमाश्चाप्तवचने। तस्मात् त्रिष्वेव सर्वप्रमाणसिद्धत्वात् त्रिविधं प्रमाणमिष्टं तदाह। तेन त्रिविधेन प्रमाणेन प्रमाणसिद्धिर्भवतीति वाक्यशेषः। प्रमेयसिद्धिः प्रमाणाद्धि। प्रमेयं—प्रधानं बुद्धिरहंकारः पञ्च तन्मात्राण्येकादशेन्द्रियाणि पञ्च महाभूतानि पुरुष इति, एतानि पञ्चविंशतितत्त्वानि व्यक्ताव्यक्तज्ञा इत्युच्यन्ते। तत्र किंचित् प्रत्यक्षेण साध्यं किंचिदनुमानेन किंचिदागमेनेति त्रिविधं प्रमाणमुक्तम् ॥ ४ ॥

तस्य किं लक्षणमेतदाह—

**प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।**
**तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥**

प्रतिविषयेषु श्रोत्रादीनां शब्दादिविषयेषु अध्यवसायो दृष्टम्, प्रत्यक्षमित्यर्थः । त्रिविधमनुमानमाख्यातम्, पूर्ववत् शेषवत् सामान्यतोदृष्टं चेति । पूर्वमस्यास्तीति पूर्ववद्, यथा—मेघोन्नत्या वृष्टिं साधयति पूर्वदृष्टत्वात् । शेषवद् यथा—समुद्रोदकं जलपलं लवणमासाद्य शेषस्याप्यस्ति लवणभाव इति सामान्यतोदृष्टम्, देशान्तराद्देशान्तरं प्राप्तं दृष्टम्, गतिमच्चन्द्रतारकं चैत्रवत्, यथा—चैत्रनामानं देशान्तराद्देशान्तरं प्राप्तमवलोक्य गतिमानयमिति, तद्वच्चन्द्रतारकमिति, तथा—पुष्पिताम्रदर्शनादन्यत्र पुष्पिता आम्रा इति सामान्यतोदृष्टेन साधयति, एतत् सामान्यतोदृष्टम् । किंच तल्लिङ्गलिङ्गिपूर्वकमिति, तदनुमानं लिङ्गपूर्वकम्, यत्र लिङ्गेन लिङ्गी अनुमीयते यथा—दण्डेन यतिः । लिङ्गिपूर्वकं च, यत्र लिङ्गिना लिङ्गमनुमीयते यथा—दृष्ट्वा यतिमस्येदं त्रिदण्डमिति । आप्तश्रुतिराप्तवचनं च, आप्ता आचार्या ब्रह्मादयः, श्रुतिर्वेदः, आप्ताश्च श्रुतिश्च आप्तश्रुतिः (१) तदुक्तमाप्तवचनमिति; एवं त्रिविधं प्रमाणमुक्तम् ॥ ५ ॥

तत्र केन प्रमाणेन किं साध्यमुच्यते—

**सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।**
**तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् ॥ ६ ॥**

सामान्यतोदृष्टादनुमानादतीन्द्रियाणामिन्द्रियाण्यतीत्य वर्त-

---

(१) आर्षत्वादेकवचनम्, मध्ये संहितशब्दलोपो वेत्यादि ।

मानानां सिद्धिः । प्रधानपुरुषावतीन्द्रियौ सामान्यतोदृष्टेनानुमानेन साध्येते; यस्मान्महदादि लिङ्गं त्रिगुणं, यस्येदं त्रिगुणं कार्यं तत् प्रधानमिति; यतश्चाचेतनं चेतनमिवाभाति अतोऽन्योऽधिष्ठाता पुरुष इति । व्यक्तम्, प्रत्यक्षसाध्यम् । तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम्, यथा—इन्द्रो देवराज उत्तराः कुरवः स्वर्गेऽप्सरस इति परोक्षमाप्तवचनात् सिद्धम् ॥ ६ ॥

अत्र कश्चिदाह प्रधानं पुरुषो वा नोपलभ्यते, यच्च नोपलभ्यते लोके, तन्नास्ति तस्मात् तावपि न स्तः। यथा—द्वितीयं शिरस्तृतीयो बाहुरिति । तदुच्यते—

अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्च ॥ ७ ॥

अत्र सतामप्यर्थानामष्टधोपलब्धिर्न भवति । तद् यथा—इह सतामप्यर्थानामतिदूरादनुपलब्धिर्दृष्टा यथा— देशान्तरस्थानां चैत्रमैत्रविष्णुमित्राणाम् । सामीप्याद् यथा—चक्षुषोऽञ्जनानुपलब्धिः । इन्द्रियाभिघाताद् यथा—बधिरान्धयोः शब्दरूपानुपलब्धिः । मनोऽनवस्थानाद् यथा—व्यग्रचित्तः सम्यक्कथितमपि नावधारयति । सौक्ष्म्याद् यथा—धूमोष्मजलनीहारपरमाणवो गगनगता नोपलभ्यन्ते । व्यवधानाद् यथा—कुड्येन पिहितं वस्तु नोपलभ्यते । अभिभवाद् यथा—सूर्यतेजसाभिभूता ग्रहनक्षत्रतारकादयो नोपलभ्यन्ते । समानाभिहाराद् यथा—मुद्गराशौ मुद्गः क्षिप्तः कुवलयामलकमध्ये कुवलयामलके क्षिप्ते कपोतमध्ये कपोतो नोपलभ्यते प्रधानद्रव्यमध्याहृतत्वात्; एवमष्टधानुपलब्धिः सतामर्थानामिह दृष्टा ॥ ७ ॥

एवं चास्ति किमभ्युपगम्यते प्रधानपुरुषयोरप्येतयोर्वानुपलब्धिः केन हेतुना केन चोपलब्धिस्तदुच्यते—

**सौक्ष्म्यात् तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः ।**
**महदादि तच्च कार्यं प्रकृतिविरूपं सरूपं च ॥ ८ ॥**

सौक्ष्म्यात् तदनुपलब्धिः, प्रधानस्येत्यर्थः, प्रधानं सौक्ष्म्यान्नोपलभ्यते यथा—आकाशे धूमोष्मजलनीहारपरमाणवः सन्तोऽपि नोपलभ्यन्ते । कथं तर्हि तदुपलब्धिः? कार्यतस्तदुपलब्धिः । कार्यं दृष्ट्वा कारणमनुमीयते अस्ति प्रधानं कारणं यस्येदं कार्यम् । बुद्धिरहंकारः पञ्च तन्मात्राण्येकादशेन्द्रियाणि पञ्च महाभूतान्येव तत्कार्यम् । तच्च कार्यम्, प्रकृतिविरूपम्, प्रकृतिः प्रधानं तस्य विरूपं प्रकृतेरसदृशम् । सरूपं च, समानरूपं च यथा—लोकेऽपि पितुस्तुल्य इव पुत्रो भवत्यतुल्यश्च । येन हेतुना तुल्यमतुल्यं तदुपरिष्टाद्वक्ष्यामः ॥ ८ ॥

यदिदं महदादि कार्यं तत् किं प्रधाने सदुताहोस्विदसत्, आचार्यविप्रतिपत्तेरयं संशयः । यतोऽत्र सांख्यदर्शने सत् कार्यम् । बौद्धादीनामसत् कार्यम् । यदि सदसन्न भवत्यथासत् सन्न भवतीति विप्रतिषेधस्तत्राह—

**असदकरणादुपादानग्रहणात् सर्वसंभवाभावात् ।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम् ॥ ९ ॥**

असदकरणात्, न सदसदसतोऽकरणं तस्मात् सत् कार्यम्, इह लोकेऽसत्करणं नास्ति यथा—सिकताभ्यस्तैलोत्पत्तिः, तस्मात् सतः करणादस्ति प्रागुत्पत्तेः प्रधाने व्यक्तम्, अतः सत् कार्यम् । किंचान्यत्, उपादानग्रहणात्, उपादानं

कारणं तस्य ग्रहणात्, इह लोके यो येनार्थी स तदुपादान-ग्रहणं करोति दध्यर्थी क्षीरस्य न तु जलस्य, तस्मात् सत् कार्यम्। इतश्च, सर्वसंभवाभावात्, सर्वस्य सर्वत्र संभवो नास्ति यथा—सुवर्णस्य रजतादौ तृणपांशुसिकतासु, तस्मात् सर्वसंभवाभावात् सत् कार्यम्। इतश्च, शक्तस्य शक्यकरणात्, इह कुलालः शक्तो मृद्दण्डचक्रचीवररज्जुनीरादिकरणोपकरणं वा शक्यमेव घटं मृत्पिण्डादुत्पादयति, तस्मात् सत् कार्यम्। इतश्च, कारणभावाच्च सत् कार्यम्, कारणं यल्लक्षणं तल्लक्षणमेव कार्यमपि यथा—यवेभ्यो यवा व्रीहिभ्यो व्रीहयः, यदाऽसत् कार्यं स्यात् ततः कोद्रवेभ्यः शालयः स्युर्न च सन्तीति, तस्मात् सत् कार्यम्; एवं पञ्चभिर्हेतुभिः प्रधाने महदादि लिङ्गमस्ति, तस्मात् सत उत्पत्तिर्नासत इति ॥ ९ ॥

प्रकृतिविरूपं सरूपं च यदुक्तं तत् कथमित्युच्यते—

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।**
**सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥**

व्यक्तं महदादि कार्यं, हेतुमदिति, हेतुरस्यास्ति हेतुमत्, उपादानं हेतुः कारणं निमित्तमिति पर्यायाः। व्यक्तस्य प्रधानं हेतुरस्ति; अतो हेतुमद्व्यक्तं भूतपर्यन्तम्, हेतुमद्बुद्धितत्त्वं प्रधानेन, हेतुमानहंकारो बुद्ध्या, पञ्च तन्मात्राण्येकादशेन्द्रियाणि हेतुमन्त्यहङ्कारेण, आकाशं शब्दतन्मात्रेण हेतुमत्, वायुः स्पर्शतन्मात्रेण हेतुमान्, तेजो रूपतन्मात्रेण हेतुमत्; आपो रसतन्मात्रेण हेतुमत्यः, पृथिवी गन्धतन्मात्रेण हेतुमती; एवं भूतपर्यन्तं व्यक्तं हेतुमत्। किंचान्यत्,

अनित्यम्, यस्मादन्यस्मादुत्पद्यते, यथा—मृत्पिण्डादुत्पद्यते घटः स चानित्यः । किंच अव्यापि, असर्वगमित्यर्थः, यथा—प्रधानपुरुषौ सर्वगतौ नैवं व्यक्तम् । किंचान्यत्, सक्रियम्, संसारकाले संसरति, त्रयोदशविधेन करणेन संयुक्तं सूक्ष्मं शरीरमाश्रित्य संसरति, तस्मात् सक्रियम् । किंचान्यत्, अनेकम्, बुद्धिरहङ्कारः पञ्च तन्मात्राण्येकादशेन्द्रियाणि पञ्च महाभूतानि चेति । किंचान्यत्, आश्रितम्, स्वकारणमाश्रयते, प्रधानाश्रिता बुद्धिः, बुद्धिमाश्रितोऽहंकारः, अहंकाराश्रितान्येकादशेन्द्रियाणि पञ्च तन्मात्राणि च, पञ्चतन्मात्राश्रितानि पञ्च महाभूतानीति । किंच, लिङ्गम्, लययुक्तम्, लयकाले पञ्च महाभूतानि तन्मात्रेषु लीयन्ते तान्येकादशेन्द्रियैः सहाहंकारे स च बुद्धौ सा च प्रधाने लयं यातीति । तथा सावयवम्, अवयवाः शब्दस्पर्शरसरूपगन्धाः, तैः सह । किंच, परतन्त्रम्, नात्मनः प्रभवति, यथा—प्रधानतन्त्रा बुद्धिः, बुद्धितन्त्रोऽहंकारः, अहंकारतन्त्राणि तन्मात्राणीन्द्रियाणि च, तन्मात्रतन्त्राणि पञ्च महाभूतानि च । एवं परतन्त्रं परायत्तं व्याख्यातं व्यक्तम् । अथोऽव्यक्तं व्याख्यास्यामः—विपरीतमव्यक्तम् । एतैरेव गुणैर्यथोक्तैर्विपरीतमव्यक्तम्, हेतुमद्व्यक्तमुक्तम् । न हि प्रधानात् परं किंचिदस्ति, यतः प्रधानस्यानुत्पत्तिः; तस्मादहेतुमदव्यक्तम् । तथाऽनित्यं च व्यक्तम्, नित्यमव्यक्तमनुत्पाद्यत्वात्, न हि भूतानीव कुतश्चिदुत्पद्यत इत्यव्यक्तं प्रधानम् । किंचाव्यापि व्यक्तम्, व्यापि प्रधानं सर्वगतत्वात् । सक्रियं व्यक्तमक्रियमव्यक्तं सर्वगतत्वादेव । तथाऽनेकं व्यक्तमेकं प्रधानं कारणत्वात्, त्रयाणां लोकानां प्रधानमेकं कारणम्; तस्मा-

त्येकं प्रधानम् । तथाऽऽश्रितं व्यक्तमनाश्रितमव्यक्तमकार्यत्वात्, न हि प्रधानात् किंचिदस्ति परं यस्य प्रधानं कार्यं स्यात् । तथा व्यक्तं लिङ्गम्, अलिङ्गमव्यक्तं नित्यत्वात्, महदादि लिङ्गं प्रलयकाले परस्परं प्रलीयते नैवं प्रधानम्; तस्मादलिङ्गं प्रधानम् । तथा सावयवं व्यक्तम्, निरवयवमव्यक्तं न हि शब्दस्पर्शरसरूपगन्धाः प्रधाने सन्ति । तथा परतन्त्रं व्यक्तम्, स्वतन्त्रमव्यक्तं प्रभवत्यात्मनः ॥ १० ॥

एवं व्यक्ताव्यक्तयोर्वैधर्म्यमुक्तं साधर्म्यमुच्यते यदुक्तं सरूपं च—

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥**

त्रिगुणं व्यक्तं सत्त्वरजस्तमांसि त्रयो गुणा यस्येति । अविवेकि व्यक्तं न विवेकोऽस्यास्तीति, इदं व्यक्तमिमे गुणा इति न विवेकं कर्तुं याति, अयं गौरयमश्व इति यथा, ये गुणास्तद्व्यक्तं यद् व्यक्तं ते च गुणा इति । तथा विषयो व्यक्तम्, भोग्यमित्यर्थः, सर्वपुरुषाणां विषयभूतत्वात् । तथा सामान्यं व्यक्तम्, मूल्यदासीवत् सर्वसाधारणत्वात् । अचेतनं व्यक्तम्, सुखदुःखमोहान् न चेतयतीत्यर्थः । तथा प्रसवधर्मि व्यक्तम्, तत् यथा—बुद्धेरहंकारः प्रसूयते तस्मात् पञ्च तन्मात्राणि एकादशेन्द्रियाणि च प्रसूयन्ते तन्मात्रेभ्यः पञ्च महाभूतानि; एवमेते व्यक्तधर्माः प्रसवधर्मिणस्ता उक्ताः, एवमेभिरव्यक्तं सरूपम्; यथा—व्यक्तं तथा प्रधानमिति । तत्र त्रिगुणं व्यक्तमव्यक्तमपि त्रिगुणं यस्यैतन्महदादिकार्यं त्रिगुणम्, इह यदात्मकं कारणं तदात्मकं कार्यमिति, यथा—कृष्णतन्तुकृतः कृष्ण एव पटो भवति । तथाऽविवेकि व्यक्तम्, प्रधानमपि

गुणैर्न भिद्यते, अन्ये गुणा अन्यत् प्रधानमेवं विवेक्तुं न याति तदविवेकि प्रधानम्। तथा विषयो व्यक्तं, प्रधानमपि सर्वपुरुषविषयभूतत्वाद्विषय इति। तथा सामान्यं व्यक्तं प्रधानमपि, सर्वसाधारणत्वात्। तथाऽचेतनं व्यक्तं प्रधानमपि सुखदुःखमोहान् न चेतयतीति, कथमनुमीयते,—इह ह्यचेतनान्मृत्पिण्डाद[illegible]नो घट उत्पद्यते। तथा प्रसवधर्मि व्यक्तं प्रधानमपि प्रसवधर्मि; यतः प्रधानाद् बुद्धिरुत्पद्यते। एवं प्रधानमपि व्याख्यातम्। इदानीं तद्विपरीतस्तथा च पुमानित्येतद्व्याख्यायते। तद्विपरीतस्ताभ्यां व्यक्ताव्यक्ताभ्यां विपरीतः पुमान्, तद्यथा त्रिगुणं व्यक्तमव्यक्तं च, अगुणः पुरुषः। अविवेकि व्यक्तमव्यक्तं च, विवेकी पुरुषः। तथा विषयो व्यक्तमव्यक्तं च, अविषयः पुरुषः। तथा सामान्यं व्यक्तमव्यक्तं च, असामान्यः पुरुषः। अचेतनं व्यक्तमव्यक्तं च, चेतनः पुरुषः, सुखदुःखमोहांश्चेतयति सं[illegible]नीते तस्माच्चेतनः पुरुष इति। प्रसवधर्मि व्यक्तं प्रधानं च, [illegible]सवधर्मी पुरुषः, न हि किंचित् पुरुषात् प्रसूयते; तस्मादुक्तं तद्विपरीतः पुमानिति। तदुक्तं—तथा च पुमानिति, तत् पूर्वस्यामार्यायां प्रधानमहेतुमद्यथा व्याख्यातं तथा च पुमान्, तद्यथा—हेतुमदनित्यमित्यादि व्यक्तं तद्विपरीतमव्यक्तम्; तत्र हेतुमद्व्यक्तमहेतुमत् प्रधानम्, तथा च पुमानहेतुमान्, अनुत्पाद्यत्वात्। अनित्यं व्यक्तं नित्यं प्रधानम्, तथा च नित्यः पुमान्। अव्यापि व्यक्तं व्यापि प्रधानम्; तथा च व्यापी पुमान्, सर्वगतत्वात्। सक्रियं व्यक्तमक्रियं प्रधानम्, तथा च पुमानक्रियः, सर्वगतत्वादेव। अनेकं व्यक्तमेकमव्यक्तम्,

तथा च पुमानप्येकः (१)। आश्रितं व्यक्तमनाश्रितमव्यक्तम्, तथा च पुमाननाश्रितः। लिङ्गं व्यक्तमलिङ्गं प्रधानम्, तथा च पुमानप्यलिङ्गः, न क्वचिल्लीयत इति। सावयवं व्यक्तं निरवयवमव्यक्तम्, तथा च पुमान् निरवयवः, न हि पुरुषे शब्दादयोऽवयवाः सन्ति। किंच परतन्त्रं व्यक्तं स्वतन्त्रमव्यक्तम्, तथा च पुमानपि स्वतन्त्रः, आत्मनः प्रभवतीत्यर्थः॥ ११॥

एवमेतद्व्यक्तपुरुषयोः साधर्म्यं व्याख्यातं पूर्वस्यामार्यायाम्। व्यक्तप्रधानयोः साधर्म्यं पुरुषस्य वैधर्म्यं च त्रिगुणमविवेकीत्यादिप्रक्तार्यायां व्याख्यातम्। तत्र यदुक्तं त्रिगुणमिति व्यक्तमव्यक्तं च तत् के ते गुणा इति तत्स्वरूपप्रतिपादनायेदमाह—

**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।**
**अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः॥१२॥**

प्रीत्यात्मका अप्रीत्यात्मका विषादात्मकाश्च, गुणाः सत्त्वरजस्तमांसीत्यर्थः। तत्र प्रीत्यात्मकं सत्त्वम्, प्रीतिः सुखं तदात्मकमिति। अप्रीत्यात्मकं रजः, अप्रीतिर्दुःखम्। विषादात्मकं तमः, विषादो मोहः। तथा प्रकाशप्रवृत्तिनियमार्थाः। अर्थशब्दः सामर्थ्यवाची, प्रकाशार्थं सत्त्वम्, प्रकाशसमर्थमित्यर्थः। प्रवृत्त्यर्थं रजः। नियमार्थं तमः, स्थितौ समर्थमित्यर्थः। प्रकाशक्रियास्थितिशीला गुणा इति। तथाऽन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च। अन्योन्याभिभवा अन्योन्याश्रया अन्योन्यजनना अन्योन्यमिथुना अन्योन्यवृत्तयश्च ते तथोक्ताः। अन्योन्याभिभवा इति, अन्योन्यं परस्परमभिभवन्तीति, प्रीत्यप्रीत्यादिभिर्धर्मैराविर्भवन्ति, यथा—यदा

(१) एकरूप इत्यर्थः।

सत्त्वमुत्कटं भवति तदा रजस्तमसी अभिभूय स्वगुणेन प्रीतिप्रकाशात्मनाऽवतिष्ठते, यदा रजस्तदा सत्त्वतमसी अप्रीतिप्रवृत्त्यात्मना धर्मेण, यदा तमस्तदा सत्त्वरजसी विषादस्थित्यात्मकेनेति । तथाऽन्योन्याश्रयाश्च द्व्यणुकवद्गुणाः । अन्योन्यजननाः, यथा—मृत्पिण्डो घटं जनयति । तथा अन्योन्यमिथुनाश्च, यथा—स्त्रीपुंसावन्योन्यमिथुनौ तथा गुणाः । उक्तं च—

"रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते" ॥

परस्परसहाया इत्यर्थः । अन्योन्यवृत्तयश्च परस्परं वर्तन्ते, "गुणा गुणेषु वर्तन्त" इति वचनात्, यथा—सुरूपा सुशीला स्त्री सर्वसुखहेतुः सपत्नीनां सैव दुःखहेतुः सैव रागिणां मोहं जनयति, एवं सत्त्वं रजस्तमसोर्वृत्तिहेतुः, यथा—राजा सदोद्युक्तः प्रजापालने दुष्टनिग्रहे शिष्टानां सुखमुत्पादयति दुष्टानां दुःखं मोहं च, एवं रजः सत्त्वतमसोर्वृत्तिं जनयति । तथा तमः स्वरूपेणावरणात्मकेन सत्त्वरजसोर्वृत्तिं जनयति, यथा—मेघाः खमावृत्य जगतः सुखमुत्पादयन्ति ते वृष्ट्या कर्षकाणां कर्षणोद्योगं जनयन्ति विरहिणां मोहम्; एवमन्योन्यवृत्तयो गुणाः ॥ १२ ॥

किंचान्यत्—

**सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।**
**गुरु वरणकमेव(१) तमः प्रदीपवच्चार्थतो वृत्तिः(२) ॥१३॥**

---

(१) एवकारो भिन्नक्रमः प्रत्येकं संबध्यते, सत्त्वमेव रज एव तम एवेति ।
(२) पुरुषार्थत इति यावत्, तथा च वक्ष्यति पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणमिति ।

T

सत्त्वं, लघु प्रकाशकं च, यदा सत्त्वमुत्कटं भवति तदा लघून्यङ्गानि बुद्धिप्रकाशश्च प्रसन्नतेन्द्रियाणां भवति। उपष्टम्भकं चलं च रजः, उपष्टभ्नातीत्युपष्टम्भकमुद्योतकं यथा—वृषो वृषदर्शने उत्कटमुपष्टम्भं करोति, एवं रजोवृत्तिः, तथा रजश्च चलं दृष्टम्, रजोवृत्तिश्चलचित्तो भवति। गुरु वरणकमेव तमः, यदा तम उत्कटं भवति तदा गुरूण्यङ्गान्यावृतानीन्द्रियाणि भवन्ति स्वार्थासमर्थानि। अत्राह—यदि गुणाः परस्परं विरुद्धाः स्वमतेनैव कमर्थं निष्पादयन्ति, तर्हि कथम्? प्रदीपवच्चार्थतो वृत्तिः, प्रदीपेन तुल्यं प्रदीपवत्, अर्थतः साधना वृत्तिरिष्टा, यथा— प्रदीपः परस्परविरुद्धतैलाग्निवर्तिसंयोगादर्थप्रकाशान् जनयति; एवं सत्त्वरजस्तमांसि परस्परं विरुद्धान्यर्थं निष्पादयन्ति ॥ १३ ॥

अन्तरप्रश्नो भवति त्रिगुणमविवेकिविषय इत्यादिना प्रधानं व्यक्तं च व्याख्यातम्, तत्र प्रधानमुपलभ्यमानं महदादि च त्रिगुणमविवेक्यादीति च कथमवगम्यते? तत्राह—

**अविवेक्यादिः(१) सिद्धस्त्रैगुण्यात् तद्विपर्ययाभावात्।**
**कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धम् ॥ १४ ॥**

योऽयमविवेक्यादिर्गुणः स त्रैगुण्यान्महदादौ व्यक्ते नायं सिध्यति। अत्रोच्यते—तद्विपर्ययाभावात्, तस्य त्रिपर्ययस्तद्विपर्ययस्तस्याभावस्तद्विपर्ययाभावः, तस्मात् सिद्धमव्यक्तम्, यथा—यत्रैव तन्तवस्तत्रैव पटः, अन्ये तन्तवोऽन्यः पटो न, कुतः, तद्विपर्ययाभावात्, एवं व्यक्ताव्यक्तसंपन्नो भवति, दूरं प्रधानमासन्नं व्यक्तम्, यो व्यक्तं पश्यति स प्रधानमपि पश्यति

(१) अविवेकित्वादिकम्।

तद्विपर्ययाभावात्। इतश्चाव्यक्तं सिद्धं कारणगुणात्मकत्वात् कार्यस्य, लोके यदात्मकं कारणं तदात्मकं कार्यमपि यथा—कृष्णेभ्यस्तन्तुभ्यः कृष्ण एव पटो भवति, एवं महदादि लिङ्गमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि, यदात्मकं लिङ्गं तदात्मकमव्यक्तमपि सिद्धम् ॥ १४ ॥

त्रैगुण्यादविवेक्यादिर्व्यक्ते सिद्धस्तद्विपर्ययाभावात्, एवं कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धमित्येतन्मिथ्या, लोके यन्नोपलभ्यते तन्नास्ति, इति न वाच्यम्, सतोऽपि पाषाणगन्धादेरनुपलम्भात्, एवं प्रधानमप्यस्ति किंतु नोपलभ्यते तदाह—

**भेदानां परिमाणात्(१) समन्वयात्(२) शक्तितः प्रवृत्तेश्च ।**
**कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५ ॥**

कारणमस्त्यव्यक्तमिति क्रियाकारकसंबन्धः । भेदानां परिमाणात्, लोके यत्र कर्ताऽस्ति तस्य परिमाणं दृष्टं यथा कुलालः परिमितैर्मृत्पिण्डैः परिमितानेव घटान् करोति, एवं महदपि महदादि लिङ्गं परिमितं भेदतः, प्रधानकार्यमेका बुद्धिरेकोऽहंकारः पञ्च तन्मात्राण्येकादशेन्द्रियाणि पञ्च

(१) अत्रेदमनुमानं विवादाध्यासिता भेदा अव्यक्तकारणवन्तः परिमितत्वात् घटादिवदिति, घटादयो हि परिमिता मृदाद्यव्यक्तकारणका दृष्टाः, उक्तमेतद्यथा कार्यस्याव्यक्तावस्था कारणमेवेति, यन्महतः कारणं तत् परमाव्यक्तं ततः परतराव्यक्तकल्पनायां प्रमाणाभावात् ।

(२) इतश्च विवादाध्यासिता भेदा अव्यक्तकारणवन्तः समन्वयात्, भिन्नानां सरूपता समन्वयः, सुखदुःखमोहसमन्विता हि बुद्ध्यादयोऽध्यवसायादिलक्षणाः प्रतीयन्ते, यानि च यद्रूपं समनुगतानि तानि तत्स्वभावाव्यक्तकारणकानि, यथा मृद्धेमपिण्डं समनुगता घटमुकुटादयो मृद्धेमपिण्डाव्यक्तकारणका दृष्टा इति ।



T

महाभूतानीत्येवं भेदानां परिमाणादस्ति प्रधानं कारणं यद् व्यक्तं परिमितमुत्पादयति, यदि प्रधानं न स्यात् तदा निष्परिमाणमिदं व्यक्तमपि न स्यात्, परिमाणाच्च भेदानामस्ति प्रधानं यस्माद्व्यक्तमुत्पन्नम् । तथा **समन्वयात्**, इह लोके प्रसिद्धिर्दृष्टा यथा—व्रतधारिणं बटुं दृष्ट्वा समन्वयति नूनमस्य पितरौ ब्राह्मणाविति, एवमिदं त्रिगुणं महदादि लिङ्गं दृष्ट्वा साधयामोऽस्य यत् कारणं भविष्यतीति, अतः समन्वयादस्ति प्रधानम् । तथा **शक्तितः प्रवृत्तेश्च**, इह यो यस्मिन् शक्तः स तस्मिन्नेवार्थे प्रवर्तते यथा—कुलालो घटस्य करणे समर्थो घटमेव करोति न पटं रथं वा । तथा अस्ति प्रधानं कारणम्, कुतः? **कारणकार्यविभागात्**, करोतीति कारणम्, क्रियत इति कार्यम्, कारणस्य कार्यस्य च विभागो यथा—घटो दधिमधूदकपयसां धारणे समर्थो न तत्कारणं मृत्पिण्डः, मृत्पिण्डो वा घटं निष्पादयति न चैवं घटो मृत्पिण्डम्,—एवं महदादि लिङ्गं दृष्ट्वाऽनुमीयते, अस्ति विभक्तं तत् कारणं यस्य विभाग इदं व्यक्तमिति । इतश्च, **अविभागाद्वैश्वरूप्यस्य**, विश्वं जगत्, रूपं व्यक्तिः, विश्वरूपस्य भावो वैश्वरूप्यम्, तस्याविभागादस्ति प्रधानम्; यस्मात् त्रैलोक्यस्य पञ्चानां पृथिव्यादीनां महाभूतानां परस्परं विभागो नास्ति महाभूतेष्वन्तर्भूतास्त्रयो लोका इति, पृथिव्यापस्तेजो वायुराकाशमित्येतानि पञ्च महाभूतानि प्रलयकाले सृष्टि-क्रमेणैवाविभागं यान्ति तन्मात्रेषु परिणामिषु, तन्मात्रा-ण्येकादशेन्द्रियाणि चाहंकारे, अहंकारो बुद्धौ, बुद्धिः प्रधाने, एवं त्रयो लोकाः प्रलयकाले प्रकृतावविभागं गच्छन्ति; तस्मादवि-भागात् क्षीरदधिवदव्यक्ताव्यक्तयोरस्त्यव्यक्तं कारणम् ॥ १५ ॥

कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च ।
परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात्॥ १६॥

अतश्चाव्यक्तं प्रख्यातं कारणमस्ति यस्मान्महदादि लिङ्गं प्रवर्तते । त्रिगुणतः—त्रिगुणात्, सत्त्वरजस्तमांसि गुणा यस्मिंस्तत् त्रिगुणम्, तत् किमुक्तं भवति, सत्त्वरजस्तमसां साम्यावस्था प्रधानम् । तथा समुदयात् यथा—गङ्गास्रोतांसि त्रीणि रुद्रमूर्धनि पतितान्येकं स्रोतो जनयन्ति; एवं त्रिगुणमव्यक्तमेकं व्यक्तं जनयति यथा—वा तन्तवः समुदिताः पटं जनयन्ति, एवमव्यक्तं गुणसमुदयान्महदादि जनयतीति त्रिगुणतः समुदयाच्च व्यक्तं जगत् प्रवर्तते । यस्मादेकस्मात् प्रधानाद्व्यक्तं तस्मादेकरूपेण भवितव्यम्, नैष दोषः, परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात्, एकस्मात् प्रधानात् त्रयो लोकाः समुत्पन्नास्तुल्यभावा न भवन्ति, देवाः सुखेन युक्ता मनुष्या दुःखेन तिर्यञ्चो मोहेन, एकस्मात् प्रधानात् प्रवृत्तं व्यक्तं प्रतिप्रतिगुणाश्रयविशेषात् परिणामतः सलिलवद्भवति, प्रतिप्रतीति वीप्सा, गुणानामाश्रयो गुणाश्रयस्तद्विशेषस्तं गुणाश्रयविशेषं प्रतिनिधाय प्रतिप्रतिगुणाश्रयविशेषं परिणामात् प्रवर्तते व्यक्तम्, यथा—आकाशादेकरसं सलिलं पतितं नानारूपात् संश्लेषाद्भिद्यते तत्तद्रसान्तरैः, एवमेकस्मात् प्रधानात् प्रवृत्तास्त्रयो लोका नैकस्वभावा भवन्ति, देवेषु सत्त्वमुत्कटं रजस्तमसी उदासीने तेन तेऽत्यन्तसुखिनः, मनुष्येषु रज उत्कटं भवति सत्त्वतमसी उदासीने तेन तेऽत्यन्तदुःखिनः, तिर्यक्षु तम उत्कटं भवति सत्त्वरजसी उदासीने तेन तेऽत्यन्तमूढाः ॥ १६ ॥

एवमार्याद्वयेन प्रधानस्यास्तित्वमवगम्यते, इतश्चोत्तरं पुरुषास्तित्वप्रतिपादनार्थमाह—

**संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।**
**पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥**

यदुक्तं व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षः प्राप्यत इति, तत्र व्यक्तादनन्तरमव्यक्तं पञ्चभिः कारणैरधिगतं व्यक्तवत्, पुरुषोऽपि सूक्ष्मस्तस्याधुनानुमितास्तित्वं प्रतिक्रियते । अस्ति पुरुषः कस्मात्? संघातपरार्थत्वात् । योऽयं महदादिसंघातः स पुरुषार्थ इत्यनुमीयते, अचेतनत्वात् पर्यङ्कवत्, यथा—पर्यङ्कः प्रत्येकं गात्रोत्पलकपादपीठतूलीप्रच्छादनपटोपधानसंघातः परार्थो, न हि स्वार्थः, पर्यङ्कस्य न हि किंचिदपि गात्रोत्पलाद्यवयवानां परस्परं कृत्यमस्ति, अतोऽवगम्यतेऽस्ति पुरुषो यः पर्यङ्के शेते यस्यार्थं पर्यङ्कस्तत् परार्थम्, इदं शरीरं पञ्चानां महाभूतानां संघातो वर्तते, अस्ति पुरुषो यस्येदं भोग्यं शरीरं भोग्यमहदादिसंघातरूपं समुत्पन्नमिति । इतश्चात्माऽस्ति त्रिगुणादिविपर्ययात्, यदुक्तं पूर्वस्यामार्यायां त्रिगुणमविवेकि विषय इत्यादि, तस्माद्विपर्ययात्, येनोक्तं तद्विपरीतस्तथा च पुमान् । अधिष्ठानात्, यथा—इह लङ्घनप्लवनधावनसमर्थैरश्वैर्युक्तो रथः सारथिनाऽधिष्ठितः प्रवर्तते तथात्माऽधिष्ठानाच्छरीरमिति, तथा चोक्तं—षष्टितन्त्रे "पुरुषाधिष्ठितं प्रधानं प्रवर्तते"। अतोऽस्त्यात्मा, भोक्तृभावात्, यथा—मधुराम्ललवणकटुतिक्तकषायषड्रसोपबृंहितस्य संयुक्तस्यान्नस्य साध्यते, एवं महदादिलिङ्गस्य भोक्तृत्वाभावादस्ति स आत्मा यस्येदं भोग्यं शरीरमिति । इतश्च, कैवल्यार्थं प्रवृत्तेश्च, केवलस्य भावः कैवल्यं तन्निमित्तं या च प्रवृत्तिस्तस्याः

स्वकैवल्यार्थं प्रवृत्तेः सकाशादनुमीयते, अस्त्यात्मेति, यतः सर्वो विद्वानविद्वांश्च संसारसंतानक्षयमिच्छति । एवमेभिर्हेतुभिरस्त्यात्मा शरीराद्व्यतिरिक्तः ॥ १७ ॥

अथ स किमेकः सर्वशरीरेऽधिष्ठाता मणिरसनात्मकसूत्रवत् आहोस्विद्बहव आत्मानः प्रतिशरीरमधिष्ठातार इत्यत्रोच्यते—

**जन्ममरणकरणानां प्रतिनियमादयुगपत् प्रवृत्तेश्च ।**
**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥**

जन्म च मरणं च करणानि च जन्ममरणकरणानि तेषां प्रतिनियमात्, प्रत्येकनियमादित्यर्थः । यद्येक एवात्मा स्यात् तत एकस्य जन्मनि सर्व एव जायेरन्, एकस्य मरणे सर्वेऽपि म्रियेरन्, एकस्य करणवैकल्ये वाधिर्यान्धत्वमूकत्वकुणित्वखञ्जत्वलक्षणे सर्वेऽपि बधिरान्धमूककुणिखञ्जाः स्युः, न चैवं भवति, तस्माज्जन्ममरणकरणानां प्रतिनियमात् पुरुषबहुत्वं सिद्धम् । इतश्च, अयुगपत् प्रवृत्तेश्च, युगपदेककालम्, न युगपदयुगपत् प्रवर्तनम्, यस्मादयुगपद्धर्मादिषु प्रवृत्तिर्दृश्यते, एके धर्मे प्रवृत्ता अन्येऽधर्मे वैराग्येऽन्ये ज्ञानेऽन्ये प्रवृत्ताः, तस्मादयुगपत् प्रवृत्तेश्च बहव इति सिद्धम् । किंचान्यत्, त्रैगुण्यविपर्ययाच्चैव, त्रिगुणभावविपर्ययाच्च पुरुषबहुत्वं सिद्धम्, यथा—सामान्ये जन्मनि एकः सात्त्विकः सुखी, अन्यो राजसो दुःखी, अन्यस्तामसो मोहवान्, एवं त्रैगुण्यविपर्ययाद्बहुत्वं सिद्धमिति ॥ १८ ॥

अकर्ता पुरुष इत्येतदुच्यते—

**तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य ।**
**कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥**

तस्माच्च विपर्यासात्, तस्माच्च यथोक्तत्रैगुण्यविपर्यासाद्विप-



T

यैयान्निर्गुणः पुरुषो विवेकी भोक्तेत्यादिगुणानां पुरुषस्य यो विपर्यास उक्तस्तस्मात्, सत्त्वरजस्तमःसु कर्तृभूतेषु साक्षित्वं सिद्धं पुरुषस्येति, योऽयमधिकृतो बहुत्वं प्रति। गुणा एव कर्तारः प्रवर्तन्ते, साक्षी न प्रवर्तते नापि निवर्तत एव। किञ्चान्यत्, कैवल्यं केवलभावः, कैवल्यमन्यत्वमित्यर्थः, त्रिगुणेभ्यः केवलोऽन्यः। माध्यस्थ्यं मध्यस्थभावः, परिव्राजकवन्मध्यस्थः पुरुषः, यथा—कश्चित् परिव्राजको ग्रामीणेषु कर्षणार्थेषु प्रवृत्तेषु केवलो मध्यस्थः, पुरुषोऽप्येवं गुणेषु प्रवर्तमानेषु न प्रवर्तते, तस्माद्द्रष्टृत्वमकर्तृभावश्च, यस्मान्मध्यस्थस्तस्माद्द्रष्टा तस्मादकर्ता पुरुषस्तेषां कर्मणामिति सत्त्वरजस्तमांसि त्रयो गुणाः कर्मकर्तृभावेन प्रवर्तन्ते न पुरुषः, एवं पुरुषस्यास्तित्वं च सिद्धम्॥ १९॥

यस्मादकर्ता पुरुषस्तत् कथमध्यवसायं करोति धर्मं करिष्याम्यधर्मं न करिष्यामीत्यतः कर्ता भवति, न च कर्ता पुरुष एवमुभयथा दोषः स्यादित्यत उच्यते—

**तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।**
**गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः॥ २०॥**

इह पुरुषश्चेतनावान् तेन चेतनावभाससंयुक्तं महदादि लिङ्गं चेतनावदिव भवति, यथा—लोके घटः शीतसंयुक्तः शीतः, उष्णसंयुक्त उष्णः, एवं महदादि लिङ्गं तस्य संयोगात् पुरुषसंयोगाच्चेतनावदिव भवति। तस्माद् गुणा अध्यवसायं कुर्वन्ति न पुरुषः। यद्यपि लोके पुरुषः कर्ता गन्तेत्यादि प्रयुज्यते तथाप्यकर्ता पुरुषः। कथम्? गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः, गुणानां कर्तृत्वे सति उदासीनोऽपि पुरुषः कर्तेव भवति, न कर्ता।

अत्र दृष्टान्तो भवति, यथा—अचौरश्चौरैः सह गृहीतश्चौर इत्यवगम्यते, एवं त्रयो गुणाः कर्तारः, तैः संयुक्तः पुरुषोऽकर्ताऽपि कर्ता भवति कर्तृसंयोगात् । एवं व्यक्ताव्यक्तज्ञानां विभागो विख्यातः, यद्विभागान्मोक्षप्राप्तिरिति ॥ २० ॥

अथैतयोः प्रधानपुरुषयोः किंहेतुः संघात उच्यते—

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥**

पुरुषस्य प्रधानेन सह संयोगो दर्शनार्थम्, प्रकृतिं महदादिकार्यं भूतपर्यन्तं पुरुषः पश्यति, एतदर्थम्, प्रधानस्यापि पुरुषेण संयोगः कैवल्यार्थम् स च संयोगः पङ्ग्वन्धवदुभयोरपि द्रष्टव्यः, यथा—एकः पङ्गुरेकश्चान्ध एतौ द्वावपि गच्छन्तौ महता सामर्थ्येनाटव्यां सार्थस्य स्तेनकृतादुपप्लवात् स्वबन्धुपरित्यक्तौ दैवादितश्चेतश्च चेरतुः, स्वगत्या च तौ संयोगमुपयातौ पुनस्तयोः स्ववचसोर्विश्वस्तत्वेन संयोगो गमनार्थं दर्शनार्थं च भवति, अन्धेन पङ्गुः स्कन्धमारोपितः, एवं शरीरारूढपङ्गुदर्शितेन मार्गेणान्धो याति पङ्गुश्चान्धस्कन्धारूढः, एवं पुरुषे दर्शनशक्तिरस्ति पङ्गुवन्न क्रिया, प्रधाने क्रियाशक्तिरस्त्यन्धवन्न दर्शनशक्तिः । यथावानयोः पङ्ग्वन्धयोः कृतार्थयोर्विभागो भविष्यतीप्सितस्थानप्राप्तयोः, एवं प्रधानमपि पुरुषस्य मोक्षं कृत्वा निवर्तते पुरुषोऽपि प्रधानं दृष्ट्वा कैवल्यं गच्छति, तयोः कृतार्थयोर्विभागो भविष्यति । किंचान्यत्, तत्कृतः सर्गः, तेन संयोगेन कृतस्तत्कृतः, सर्गः सृष्टिः, यथा—स्त्रीपुरुषसंयोगात् सुतोत्पत्तिस्तथा प्रधानपुरुषसंयोगात् सर्गस्योत्पत्तिः ॥ २१ ॥

इदानीं सर्गविभागदर्शनार्थमाह—

**प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः ।**
**तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥**

प्रकृतिः प्रधानं ब्रह्म अव्यक्तं बहुधानकं मायेति पर्यायाः। अलिङ्गस्य प्रकृतेः सकाशान्महानुत्पद्यते, महान् बुद्धिरासुरी मतिः ख्यातिर्ज्ञानमिति प्रज्ञापर्यायैरुत्पद्यते । तस्माच्च महतोऽहंकार उत्पद्यते, अहंकारो भूतादिर्वैकृतस्तैजसोऽभिमान इति पर्यायाः । तस्माद्गणश्च षोडशकः, तस्मादहंकारात् षोडशकः षोडशस्वरूपेण गण उत्पद्यते, स यथा—पञ्च तन्मात्राणि शब्दतन्मात्रं-स्पर्शतन्मात्रं-रूपतन्मात्रं-रसतन्मात्रं-गन्धतन्मात्रमिति तन्मात्रसूक्ष्मपर्यायवाच्यानि, तत एकादशेन्द्रियाणि श्रोत्रं-त्वक्-चक्षुषी-जिह्वा-घ्राणमिति पञ्च बुद्धीन्द्रियाणि, वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि, उभयात्मकमेकादशं मनश्च, एष षोडशको गणोऽहंकारादुत्पद्यते । किंच पञ्चभ्यः पञ्च भूतानि, तस्मात् षोडशकाद्गणात् पञ्चभ्यस्तन्मात्रेभ्यः सकाशात् पञ्च वै महाभूतान्युत्पद्यन्ते । यदुक्तम्,—शब्दतन्मात्रादाकाशम्, स्पर्शतन्मात्राद्वायुः, रूपतन्मात्रात् तेजः, रसतन्मात्रादापः, गन्धतन्मात्रात् पृथिवी, एवं पञ्चभ्यः परमाणुभ्यः पञ्च महाभूतान्युत्पद्यन्ते ॥ २२ ॥

यदुक्तं व्यक्ताव्यक्तज्ञविज्ञानान्मोक्ष इति, तत्र महदादि भूतान्तं त्रयोविंशतिभेदं व्याख्यातम्, अव्यक्तमपि भेदानां परिमाणादित्यादिना व्याख्यातम्, पुरुषोऽपि संघातपरार्थत्वादिभिर्हेतुभिर्व्याख्यातः; एवमेतानि पञ्चविंशतितत्त्वानि, यस्त्रैलोक्यं व्याप्तं जानाति तस्य भावोऽस्तित्वं तत्त्वम्, यथोक्तम्—

T

"पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः ।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः" ॥

तानि यथा—प्रकृतिः पुरुषो बुद्धिरहंकारः पञ्च तन्मात्राणि एकादशेन्द्रियाणि पञ्च महाभूतानि, इत्येतानि पञ्चविंशतितत्त्वानि । तत्रोक्तप्रकृतेर्महानुत्पद्यते, तस्य महतः किं लक्षणमित्येतदाह—

**अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।**
**सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥**

अध्यवसायो बुद्धिलक्षणम् । अध्यवसानमध्यवसायः, यथा—बीजे भविष्यद्वृत्तिकोऽङ्कुरस्तद्वदध्यवसायोऽयं घटोऽयं पट इत्येवं सति या सा बुद्धिरिति लक्ष्यते, सा च बुद्धिरष्टाङ्गिका सात्त्विकतामसरूपभेदात्, तत्र बुद्धेः सात्त्विकं रूपं चतुर्विधं भवति धर्मो ज्ञानं वैराग्यमैश्वर्यं चेति, तत्र धर्मो नाम—दयादानयमनियमलक्षणः, तत्र यमा नियमाश्च पातञ्जलेऽभिहिताः—"अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः", "शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः"। ज्ञानं प्रकाशोऽवगमो भानमिति पर्यायाः, तच्च द्विविधं बाह्यमाभ्यन्तरं चेति, तत्र बाह्यं नाम—वेदाः शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषाख्यषडङ्गसहिताः पुराणानि न्यायमीमांसाधर्मशास्त्राणि चेति । आभ्यन्तरं प्रकृतिपुरुषज्ञानम्, इयं प्रकृतिः सत्त्वरजस्तमसां साम्यावस्थाऽयं पुरुषः सिद्धो निर्गुणो व्यापी चेतन इति । तत्र बाह्यज्ञानेन लोकपङ्क्तिर्लोकानुराग इत्यर्थः । आभ्यन्तरेण ज्ञानेन मोक्ष इत्यर्थः । वैराग्यमपि द्विविधं बाह्यमाभ्यन्तरं च । बाह्यं दृष्टविषयवैतृष्ण्यमर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनाद् विरक्तस्य,



T

आभ्यन्तरं प्रधानमप्यत्र स्वप्नेन्द्रजालसदृशमिति विरक्तस्य, मोक्षे प्सोर्यदुत्पद्यते तदाभ्यन्तरं वैराग्यम् । ऐश्वर्यमीश्वरभावः, तच्चाष्टगुणम्, अणिमा महिमा लघिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं यत्र कामावसायित्वं चेति। अणोर्भावोऽणिमा सूक्ष्मो भूत्वा जगति विचरतीति । महिमा महान् भूत्वा विचरतीति । लघिमा मृणालीतूलावयवादपि लघुतया पुष्पकेसराग्रेष्वपि तिष्ठति । प्राप्तिरभिमतं वस्तु यत्र तत्रावस्थितः प्राप्नोति । प्राकाम्यं प्रकामतो यदेवेच्छति तदेव विदधाति । ईशित्वं प्रभुतया त्रैलोक्यमपीष्टे । वशित्वं सर्वं वशीभवति । यत्र कामावसायित्वं ब्रह्मादिस्तम्बपर्यन्तम्, यत्र कामस्तत्रैवास्य स्वेच्छया स्थानासनविहारानाचरतीति । चत्वार्येतानि बुद्धेः सात्त्विकानि रूपाणि । यदा सत्त्वेन रजस्तमसी अभिभूते तदा पुमान् बुद्धिगुणान् धर्मादीनाप्नोति। किंचान्यत्, तामसमस्माद्विपर्यस्तम्, अस्माद्धर्मादेर्विपरीतं तामसं बुद्धिरूपम्, तत्र धर्माद्विपरीतोऽधर्मः, एवमज्ञानमवैराग्यमनैश्वर्यमिति । एवं सात्त्विकैस्तामसैः स्वरूपैरष्टाङ्गा बुद्धिस्त्रिगुणादव्यक्तादुत्पद्यते ॥ २३ ॥

एवं बुद्धिलक्षणमुक्तम्, अहंकारलक्षणमुच्यते—

अभिमानोऽहंकारस्तस्माद् द्विविधः प्रवर्तते सर्गः ।
एकादशकश्चगणस्तन्मात्रापञ्चकश्चैव ॥ २४ ॥

एकादशकश्च गण एकादशेन्द्रियाणि, तथा तन्मात्रो गणः पञ्चकः; पञ्चलक्षणोपेतः शब्दतन्मात्र-स्पर्शतन्मात्र-रूपतन्मात्र-रसतन्मात्रगन्धतन्मात्रलक्षणोपेतः ॥ २४ ॥

T

किंलक्षणात् सर्ग इत्येतदाह—

**सात्त्विक एकादशकः प्रवर्तते वैकृतादहंकारात् ।**
**भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ २५ ॥**

सत्त्वेनाभिभूते यदा रजस्तमसी अहंकारे भवतस्तदा सोऽहंकारः सात्त्विकः, तस्य च पूर्वाचार्यैः संज्ञा कृता वैकृत इति, तस्माद्वैकृतादहंकारादेकादशक इन्द्रियगण उत्पद्यते, तस्मात् सात्त्विकानि विशुद्धानीन्द्रियाणि स्वविषयसमर्थानि, तस्मादुच्यते सात्त्विक एकादशक इति । किंचान्यत्, भूतादेस्तन्मात्रः स तामसः, तमसाभिभूते सत्त्वरजसी अहंकारे यदा भवतस्तदा सोऽहंकारस्तामस उच्यते, तस्य पूर्वाचार्यकृता संज्ञा भूतादिः, तस्माद्भूतादेरहंकारात् तन्मात्रः पञ्चको गण उत्पद्यते, भूतानामादिभूतस्तमोबहुलस्तेनोक्तः स तामस इति, तस्माद्भूतादेः पञ्चतन्मात्रको गणः । किंच तैजसादुभयम्, यदा रजसाभिभूते सत्त्वतमसी अहंकारे भवतस्तदा तस्मात् सोऽहंकारस्तैजस इति संज्ञां लभते, तस्मात्तैजसादुभयमुत्पद्यते, उभयमिति एकादशो गणस्तन्मात्रः पञ्चकः । योऽयं सात्त्विकोऽहंकारो वैकृतिको वैकृतो भूत्वा एकादशेन्द्रियाण्युत्पादयति स तैजसमहंकारं सहायं गृह्णाति, सात्त्विको निष्क्रियः स तैजसयुक्त इन्द्रियोत्पत्तौ समर्थः, तथा तामसोऽहंकारो भूतादिसंज्ञितो निष्क्रियत्वात् तैजसेनाहंकारेण क्रियावता युक्तस्तन्मात्राण्युत्पादयति तेनोक्तं 'तैजसादुभयमिति', एवं तैजसेनाहंकारेणेन्द्रियाण्येकादश पञ्च तन्मात्राणि कृतानि भवन्ति ॥ २५ ॥

सात्त्विक एकादशक इत्युक्तः, यो वैकृतात् सात्त्विक एकाद-

श्चकः सात्त्विकादहंकारादुत्पद्यते तस्य का संज्ञेत्याह—

**बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनस्पर्शनकानि ।**
**वाक्पाणिपादपायूपस्थान् कर्मेन्द्रियाण्याहुः ॥ २६ ॥**

चक्षुरादीनि स्पर्शन(१)पर्यन्तानि बुद्धीन्द्रियाण्युच्यन्ते, स्पृश्यतेऽनेनेति स्पर्शनं त्वगिन्द्रियं तद्वाची सिद्धः स्पर्शनशब्दोऽस्ति तेनेदं पठ्यते स्पर्शनकानीति, शब्दस्पर्शरूपरसगन्धान् पञ्च विषयान् बुध्यन्ते अवगच्छन्तीति पञ्च बुद्धीन्द्रियाणि । वाक्पाणिपादपायूपस्थान् कर्मेन्द्रियाण्याहुः, कर्म कुर्वन्तीति कर्मेन्द्रियाणि, तत्र वाग् वदति, हस्तौ नानाव्यापारं कुरुतः, पादौ गमनागमनं, पायुरुत्सर्गं करोति, उपस्थ आनन्दं प्रजोत्पत्त्या ॥ २६ ॥

एवं बुद्धीन्द्रियकर्मेन्द्रियभेदेन दशेन्द्रियाणि व्याख्यातानि, मन एकादशकं किमात्मकं किंस्वरूपं चेति तदुच्यते—

**उभयात्मकमत्र मनः संकल्पकमिन्द्रियं च साधर्म्यात् ।**
**गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७ ॥**

अत्र इन्द्रियवर्गे मन उभयात्मकं बुद्धीन्द्रियेषु बुद्धीन्द्रियवत् कर्मेन्द्रियेषु कर्मेन्द्रियवत्, कस्मात् ? बुद्धीन्द्रियाणां प्रवृत्तिं कल्पयति कर्मेन्द्रियाणां च, तस्मादुभयात्मकं मनः । संकल्पयतीति संकल्पकम् । किंचान्यत्, इन्द्रियं च साधर्म्यात् समानधर्मभावात्, सात्त्विकाहंकाराद्बुद्धीन्द्रियाणि कर्मेन्द्रियाणि मनसा सहोत्पद्यमानानि मनसः साधर्म्यं प्रति, तस्मात् साधर्म्यान्मनोऽपीन्द्रियम्, एवं तान्येकादशेन्द्रियाणि सात्त्विकाद्वैकृतादहंकारादुत्पन्नानि । तत्र मनसः का वृत्तिरिति, संकल्पो वृत्तिः,

(१) एतन्मते चक्षुःश्रोत्रघ्राणरसनस्पर्शनानीति कारिकापाठः ।

T

बुद्धीन्द्रियाणां शब्दादयो वृत्तयः कर्मेन्द्रियाणां वचनादयः । अथैतानीन्द्रियाणि भिन्नानि भिन्नार्थग्राहकाणि किमीश्वरेण उत स्वभावेन कृतानि, यतः प्रधानबुद्ध्यहंकारा अचेतनाः पुरुषोऽप्यकर्तेत्यचाह, इह सांख्यानां स्वभावो नाम कश्चित् कारणमस्ति, अत्रोच्यते—गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च, इमान्येकादशेन्द्रियाणि, शब्दस्पर्शरूपरसगन्धाः पञ्चानां वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानां संकल्पश्च मनसः, एवमेते भिन्नानामेवेन्द्रियाणामर्थाः, गुणपरिणामविशेषात्—गुणानां परिणामो गुणपरिणामस्तस्य विशेषादिन्द्रियाणां नानात्वं बाह्यार्थभेदाश्च । अथैतन्नानात्वं नेश्वरेण नाहंकारेण न बुद्ध्या न प्रधानेन न पुरुषेण, स्वभावात् कृतगुणपरिणामेनेति । गुणानामचेतनत्वान्न प्रवर्तते? प्रवर्तत एव। कथम्? वक्ष्यतीहैव, "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषस्य विमोक्षार्थं तथा प्रवृत्तिः प्रधानस्य ॥" एवमचेतना गुणा एकादशेन्द्रियभावेन प्रवर्तन्ते, विशेषोऽपि तत्कृत एव येनोच्चैः प्रदेशे चक्षुरवलोकनाय स्थितम्, तथा घ्राणं तथा श्रोत्रं तथा जिह्वा स्वदेशे स्वार्थग्रहणाय । एवं कर्मेन्द्रियाण्यपि यथायथं स्वार्थसमर्थानि स्वदेशावस्थितानि स्वभावतो गुणपरिणामविशेषादेव, न तदर्था अपि, यत उक्तं शास्त्रान्तरे,—"गुणा गुणेषु वर्तन्ते", गुणानां या वृत्तिः सा गुणविषयैवेति बाह्यार्था विज्ञेया गुणकृता एवेत्यर्थः, प्रधानं यस्य कारणमिति ॥ २७ ॥

अथेन्द्रियस्य कस्य का वृत्तिरित्युच्यते—

**रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः ।**
**वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥**

४

T

मात्रशब्दो विशेषार्थोऽविशेषव्यावृत्त्यर्थः यथा—भिक्षामात्रं लभ्यते नान्यो विशेष इति, तथा चक्षू रूपमात्रे न रसादिषु, एवं शेषाण्यपि, तद्यथा—चक्षुषो रूपं, जिह्वाया रसो, घ्राणस्य गन्धः, श्रोत्रस्य शब्दः, त्वचः स्पर्शः, एवमेषां बुद्धीन्द्रियाणां वृत्तिः कथिता। कर्मेन्द्रियाणां वृत्तिः कथ्यते,—वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्, कर्मेन्द्रियाणामित्यर्थः, वाचो वचनं हस्तयोरादानं पादयोर्विहरणं पायोर्भुक्तस्याहारस्य परिणतमलोत्सर्गः, उपस्थस्यानन्दः सुतोत्पत्तिविषयः, वृत्तिरिति संबन्धः ॥ २८ ॥

अधुना बुद्ध्यहंकारमनसामुच्यते—

**स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।**
**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥**

स्वलक्षणस्वभावा स्वालक्षण्या। अध्यवसायो बुद्धिरिति लक्षणमुक्तं सैव बुद्धिवृत्तः। तथाऽभिमानोऽहंकार इत्यभिमानलक्षणोऽभिमानवृत्तिश्च। संकल्पकं मन इति लक्षणमुक्तं तेन संकल्प एव मनसो वृत्तिः। त्रयस्य बुद्ध्यहंकारमनसां स्वालक्षण्या वृत्तिरसामान्या, या प्रागभिहिता बुद्धीन्द्रियाणां च वृत्तिः साऽप्यसामान्यैवेति। इदानीं सामान्या वृत्तिराख्यायते,—सामान्यकरणवृत्तिः, सामान्येन करणानां वृत्तिः प्राणाद्या वायवः पञ्च, प्राणापानसमानोदानव्याना इति पञ्च वायवः सर्वेन्द्रियाणां सामान्या वृत्तिः, यतः, प्राणो नाम वायुर्मुखनासिकान्तर्गोचरः, तस्य यत् स्पन्दनं कर्म तत् त्रयोदशविधस्याऽपि सामान्या वृत्तिः, सति प्राणे यस्मात् करणानामात्म-

T

लाभ इति, प्राणोऽपि पञ्जरशकुनिवत् सर्वस्य चलनं करोतीति, प्राणनात् प्राण इत्युच्यते । तथाऽपनयनादपानः, तत्र यत् स्पन्दनं तदपि सामान्यवृत्तिरिन्द्रियस्य । तथा समानो मध्यदेशवर्ती य आहारादीनां समं नयनात् समानो वायुः, तत्र यत् स्पन्दनं तत् सामान्यकरणवृत्तिः । तथा ऊर्ध्वारोहणादुत्कर्षादुन्नयनाद्वा उदानो नाभिदेशमस्तकान्तर्गोचरः, तत्रोदाने यत् स्पन्दनं तत् सर्वेन्द्रियाणां सामान्या वृत्तिः । किंच शरीरव्याप्तिरभ्यन्तरविभागश्च येन क्रियतेऽसौ शरीरव्याप्याकाशवद्व्यानः, तत्र यत् स्पन्दनं तत् करणजालस्य सामान्या वृत्तिरिति । एवमेते पञ्च वायवः सामान्यकरणवृत्तिरिति व्याख्याताः, त्रयोदशविधस्यापि करणसामान्या वृत्तिरित्यर्थः ॥ २९ ॥

**युगपच्चतुष्टयस्य हि वृत्तिः क्रमशश्च तस्य निर्दिष्टा ।**
**दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥**

युगपच्चतुष्टयस्य, बुद्ध्यहंकारमनसामेकैकेन्द्रियसंबन्धे सति चतुष्टयं भवति, चतुष्टयस्य दृष्टे प्रतिविषयाध्यवसाये युगपद्वृत्तिः, बुद्ध्यहंकारमनश्चक्षूंषि युगपदेककालं रूपं पश्यन्ति स्थाणुरयमिति । बुद्ध्यहंकारमनोजिह्वा युगपद्रसं गृह्णन्ति । बुद्ध्यहंकारमनोघ्राणानि युगपद्गन्धं गृह्णन्ति । तथा त्वक्श्रोत्रे अपि । किंच क्रमशश्च तस्य निर्दिष्टा, तस्येति चतुष्टयस्य, क्रमशश्च वृत्तिर्भवति, यथा—कश्चित् पथि गच्छन् दूरादेव दृष्ट्वा स्थाणुरयं पुरुषो वेति संशये सति तत्रोपरूढं तल्लिङ्गं(१) पश्यति शकुनिं वा, ततस्तस्य मनसा संकल्पिते संशये व्यवच्छेदभूता बुद्धिर्भवति स्थाणुरयमिति, अतोऽहंकारश्च निश्चयार्थः

(१)—उपारूढां वल्लिं इति पाठान्तरम् ।

स्याणुरेवेत्येवं बुद्ध्यहंकारमनश्चक्षुषां क्रमशो वृत्तिर्दृष्टा, यथा रूपे तथा शब्दादिष्वपि बोद्धव्या, दृष्टे—दृष्टविषये। किंचान्यत्, तथाऽप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः, अदृष्टेऽनागतेऽतीते च काले बुद्ध्यहंकारमनसां रूपे चक्षुःपूर्विका त्रयस्य वृत्तिः, स्पर्शे त्वक्पूर्विका गन्धे घ्राणपूर्विका रसे रसनपूर्विका शब्दे श्रवणपूर्विका, बुद्ध्यहंकारमनसामनागते भविष्यति कालेऽतीते च तत्पूर्विका क्रमशो वृत्तिः, वर्तमाने युगपत् क्रमशश्चेति ॥ ३० ॥

किंच—

**स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।**
**पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम् ॥ ३१ ॥**

स्वां स्वामिति वीप्सा, बुद्ध्यहंकारमनांसि स्वां स्वां वृत्तिं परस्पराकूतहेतुकां "आकूतकादरसंभ्रम" इति प्रतिपद्यन्ते पुरुषार्थकरणाय बुद्ध्यहंकारादयः, बुद्धिरहंकाराकूतं ज्ञात्वा स्वविषयं प्रतिपद्यते, किमर्थम्? इति चेत्, पुरुषार्थ एव हेतुः, पुरुषार्थः कर्तव्य इत्येवमर्थं गुणानां प्रवृत्तिः, तस्मादेतानि करणानि पुरुषार्थं प्रकाशयन्ति, यद्यचेतनानीति कथं स्वयं प्रवर्तन्ते? न केनचित् कार्यते करणम्, पुरुषार्थ एवैकः कारयतीति वाक्यार्थः, न केनचित्, ईश्वरेण पुरुषेण वा, कार्यते प्रबोध्यते करणम् ॥ ३१ ॥

बुद्ध्यादि कतिविधं तदित्युच्यते—

**करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ।**
**कार्यं च तस्य दशधा हार्यं धार्यं प्रकाश्यं च ॥ ३२ ॥**

करणं महदादि त्रयोदशविधं बोद्धव्यम्, पञ्च बुद्धीन्द्रि-

T

याणि चक्षुरादीनि पञ्च कर्मेन्द्रियाणि वागादीनीति त्रयोदशविधं करणम् । तत् किं करोतीत्येतदाह—तदाहरणधारणप्रकाशकरम् । तत्राहरणं धारणं च कर्मेन्द्रियाणि कुर्वन्ति, प्रकाशं बुद्धीन्द्रियाणि । कतिविधं कार्यं तस्येति तदुच्यते,—कार्यं च तस्य दशधा, तस्य करणस्य कार्यं कर्तव्यमिति दशधा दशप्रकारम्, शब्दस्पर्शरूपरसगन्धाख्यं वचनादानविहरणोत्सर्गानन्दाख्यमेतद्दशविधं कार्यम्, बुद्धीन्द्रियैः प्रकाशितं कर्मेन्द्रियाण्याहरन्ति धारयन्ति चेति ॥ ३२ ॥

किंच—

**अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।**
**साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥**

अन्तःकरणमिति बुद्ध्यहंकारमनांसि, त्रिविधं महदादिभेदात् । दशधा बाह्यं च, बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च दशविधमेतत् करणं बाह्यम्, तत्त्रयस्यान्तःकरणस्य विषयाख्यं बुद्ध्यहंकारमनसां भोग्यं साम्प्रतकालम्, श्रोत्रं वर्तमानमेव शब्दं शृणोति नातीतं न च भविष्यन्तं, चक्षुरपि वर्तमानं रूपं पश्यति नातीतं नानागतं, त्वग्वर्तमानं स्पर्शं, जिह्वा वर्तमानं रसं, नासिका वर्तमानं गन्धं नातीतानागतं चेति । एवं कर्मेन्द्रियाणि, वाग् वर्तमानं शब्दमुच्चारयति नातीतं नानागतं, पाणी वर्तमानं घटमाददाते नातीतमनागतं च, पादौ वर्तमानं पन्थानं विहरतो नातीतं नाप्यनागतं, पायूपस्थौ च वर्तमानावुत्सर्गानन्दौ कुरुतो नातीतौ नानागतौ, एवं बाह्यं करणं साम्प्रतकालमुक्तम् । त्रिकालमाभ्यन्तरं करणम् बुद्ध्यहंकारमनांसि त्रिकालविषयाणि, बुद्धिर्वर्तमानं घटं बुध्यते

अतीतमनागतं चेति, अहंकारो वर्तमानेऽभिमानं करोत्यतीतेऽनागते च, तथा मनो वर्तमाने संकल्पं कुरुतेऽतीतेऽनागते च, एवं त्रिकालमाभ्यन्तरं करणमिति ॥ ३३ ॥

इदानीमिन्द्रियाणि कति सविशेषं विषयं गृह्णन्ति, कानि निर्विशेषमिति तदुच्यते—

**बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि ।**
**वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ॥ ३४ ॥**

बुद्धीन्द्रियाणि तेषां सविशेषं विषयं गृह्णन्ति, सविशेषविषयं मानुषाणाम्, शब्दस्पर्शरूपरसगन्धान् सुखदुःखमोहविषययुक्तान् बुद्धीन्द्रियाणि प्रकाशयन्ति । देवानां निर्विशेषान् विषयान् प्रकाशयन्ति । तथा कर्मेन्द्रियाणां मध्ये वाग् भवति शब्दविषया, देवानां मानुषाणां च वाग्वदति, श्लोकादीनुच्चारयति, तस्माद् देवानां मानुषाणां च वागिन्द्रियं तुल्यम्, शेषाण्यपि वाग्व्यतिरिक्तानि पाणिपादपायूपस्थसंज्ञितानि पञ्चविषयाणि, पञ्च विषयाः शब्दादयो येषां तानि पञ्चविषयाणि, शब्दस्पर्शरूपरसगन्धाः पाणौ सन्ति, पञ्चशब्दादिलक्षणायां भुवि पादो विहरति, पायुरिन्द्रियं पञ्चलक्षणम्(१) उत्सर्गं करोति, तथोपस्थेन्द्रियं पञ्चलक्षणं शुक्रमानन्दयति ॥ ३४ ॥

**सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।**
**तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥**

सान्तःकरणा बुद्धिः, अहंकारमनःसहितेत्यर्थः, यस्मात्

(१) पञ्चकलृप्तमिति पाठान्तरम् ।

सर्वं विषयमवगाहते गृह्णाति, त्रिष्वपि कालेषु शब्दादीन् गृह्णाति, तस्मात् त्रिविधं करणं द्वारि, द्वाराणि शेषाणि, करणानीति वाक्यशेषः ॥ ३५ ॥

किंचान्यत्—

**एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।**
**कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥**

यानि करणान्युक्तानि एते गुणविशेषाः, किंविशिष्टाः? प्रदीपकल्पाः प्रदीपवद्विषयप्रकाशकाः, परस्परविलक्षणा असदृशा भिन्नविषया इत्यर्थः, गुणविशेषा गुणेभ्यो जाताः, कृत्स्नं पुरुषस्यार्थं बुद्धीन्द्रियाणि कर्मेन्द्रियाण्यहंकारो मनश्चैतानि स्वं स्वमर्थं पुरुषस्य प्रकाश्य बुद्धौ प्रयच्छन्ति बुद्धिस्थं कुर्वन्तीत्यर्थः, यतो बुद्धिस्थं सर्वं विषयसुखादिकं पुरुष उपलभ्यते ॥ ३६ ॥

इदं चान्यत्—

**सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धिः ।**
**सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥**

सर्वेन्द्रियगतं त्रिष्वपि कालेषु सर्वं प्रत्युपभोगं उपभोगं प्रति देवमनुष्यतिर्यग्बुद्धीन्द्रियकर्मेन्द्रियद्वारेण सान्तःकरणा बुद्धिः साधयति संपादयति यस्मात् तस्मात् सैव च विशिनष्टि प्रधानपुरुषयोर्विषयविभागं करोति, प्रधानपुरुषान्तरं नानात्वमित्यर्थः, सूक्ष्ममित्यनधिकृततपश्चरणैरप्राप्यम्, इयं प्रकृतिः सत्त्वरजस्तमसां साम्यावस्था इयं बुद्धिरयमहंकार एतानि पञ्च तन्मात्राण्येकादशेन्द्रियाणि पञ्च महाभूतान्ययमन्यः पुरुष एभ्यो व्यतिरिक्त इत्येवं बोधयति बुद्धिः, यस्यावापादपवर्गो भवति ॥ ३७ ॥

T

पूर्वमुक्तं विशेषाविशेषविषयाणि तत् के विषयास्तान् दर्शयति—

**तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः ।**
**एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥ ३८ ॥**

यानि पञ्च तन्मात्राणि अहंकारादुत्पद्यन्ते शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमेतान्यविशेषा उच्यन्ते देवानामेते सुखलक्षणा विषया दुःखमोहरहिताः, तेभ्यः पञ्चभ्यः तन्मात्रेभ्यः पञ्च महाभूतानि पृथिव्यप्तेजोवाय्वाकाशसंज्ञानि यान्युत्पद्यन्ते एते स्मृता विशेषाः, गन्धतन्मात्रात् पृथिवी, रसतन्मात्रादापः, रूपतन्मात्रात् तेजः, स्पर्शतन्मात्राद्वायुः, शब्दतन्मात्रादाकाशम्, इत्येवमुत्पन्नान्येतानि महाभूतान्येते विशेषा मानुषाणां विषयाः शान्ताः सुखलक्षणा, घोरा दुःखलक्षणा, मूढा मोहजनकाः, यथा—आकाशं कस्यचिदनवकाशादन्तर्गृहादेर्निर्गतस्य सुखात्मकं शान्तं भवति तदेव शीतोष्णवातवर्षाभिभूतस्य दुःखात्मकं घोरं भवति तदेव पन्थानं गच्छतो वनमार्गाद् भ्रष्टस्य दिङ्मोहान्मूढं भवति, एवं वायुर्घर्मार्तस्य शान्तो भवति शीतार्तस्य घोरो धूलीशर्कराविमिश्रोऽतिवान् मूढ इति, एवं तेजःप्रभृतिषु द्रष्टव्यम् ॥ ३८ ॥

अथाऽन्ये विशेषाः—

**सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।**
**सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥ ३९ ॥**

सूक्ष्माः तन्मात्राणि यत्संगृहीतं तन्मात्रकं सूक्ष्मशरीरं महदादिलिङ्गं सदा तिष्ठति संसरति च ते सूक्ष्माः, तथा

T

मातापितृजाः स्थूलशरीरोपचायका ऋतुकाले मातापितृसंयोगे शोणितशुक्रमिश्रीभावेनोदरान्तः सूक्ष्मशरीरस्योपचयं कुर्वन्ति, तत् सूक्ष्मशरीरं पुनर्मातुरशितपीतनानाविधरसेन नाभीनिबन्धेन आप्यायते, तथाप्यारब्धं शरीरं सूक्ष्मैर्मातापितृजैश्च सह महाभूतैः त्रिधा विशेषैः, पृष्ठोदरजङ्घाकट्युरःशिरःप्रभृति षाट्कौशिकं पाञ्चभौतिकं रुधिरमांसस्नायुशुक्रास्थिमज्जासंभृतम् आकाशोऽवकाशदानाद्वायुर्वर्धनात् तेजः पाकादापः संग्रहात् पृथिवी धारणात् समस्तावयवोपेतं मातुरुदराद्बहिर्भवति, एवमेते त्रिविधा विशेषाः स्युः । अत्राह—के नित्याः के वानित्याः? सूक्ष्मास्तेषां नियताः, सूक्ष्मास्तन्मात्रसंज्ञकास्तेषां मध्ये नियता नित्याः, तैरारब्धं शरीरमधर्मवशात्(१) पशुमृगपक्षिसरीसृपस्थावरजातिषु संसरति, धर्मवशादिन्द्रादिलोकेषु, एवमेतन्नियतं सूक्ष्मशरीरं संसरति न यावज्ज्ञानमुत्पद्यते, उत्पन्ने ज्ञाने विद्वान् शरीरं त्यक्त्वा मोक्षं गच्छति, तस्मादेते विशेषाः सूक्ष्मा नित्या इति । मातापितृजा निवर्तन्ते, तत् सूक्ष्मशरीरं परित्यज्येहैव प्राणत्यागवेलायां मातापितृजा निवर्तन्ते, मरणकाले मातापितृजं शरीरमिहैव निवृत्य भूम्यादिषु प्रलीयते यथातत्त्वम् ॥ ३९ ॥

सूक्ष्मं च कथं संसरति तदाह—

**पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।**
**संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्॥ ४० ॥**

यदा लोका अनुत्पन्नाः प्रधानादिसर्गे तदा सूक्ष्मशरीरमुत्पन्नमिति । किंचान्यत् असक्तं न संयुक्तं तिर्यग्योनिदेवमानुषस्थानेषु,

(१) कर्मवशादिति पाठान्तरम् ।



T

सूक्ष्मत्वात् क्वचिदसक्तं पर्वतादिष्वप्रतिहतप्रसरं संसरति गच्छति। नियतम्, यावन्न ज्ञानमुत्पद्यते तावत् संसरति। तच्च महदादि-सूक्ष्मपर्यन्तम्, महानादौ यस्य तन्महदादि बुद्धिरहंकारो मन इति पञ्च तन्मात्राणि सूक्ष्मपर्यन्तं तन्मात्रपर्यन्तं संसरति शूलग्रह-पिपीलिकावत् त्रीनपि लोकान्। निरुपभोगं भोगरहितं तत् सूक्ष्मशरीरं पितामातृजेन बाह्येनोपचयेन क्रियाधर्मग्रहणाद् भोगेषु समर्थं भवतीत्यर्थः। भावैरधिवासितम्;पुरस्ताद्भावान् वक्ष्यामस्तैरधिवासितमुपरञ्जितम्। लिङ्गमिति, प्रलयकाले महदादिसूक्ष्मपर्यन्तं करणोपेतं प्रधाने लीयते, असंसरणयुक्तं सत् आसर्गकालमत्र वर्तते प्रकृतिमोहबन्धनबद्धं सत् संसरणादि-क्रियास्वसमर्थमिति, पुनः सर्गकाले संसरति तस्माल्लिङ्गं सूक्ष्मम् ॥ ४० ॥

किंप्रयोजनेन त्रयोदशविधं करणं संसरतीत्येवं चोदिते सत्याह—

**चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया ।**
**तद्वद्विना विशेषैस्तिष्ठति न निराश्रयं लिङ्गम् ॥ ४१ ॥**

चित्रं यथा कुड्याद्याश्रयमृते न तिष्ठति स्थाण्वादिभ्यः कील-कादिभ्यो विना छाया न तिष्ठति तैर्विना न भवति, आदि-ग्रहणाद् यथा शैत्यं विना नापो भवन्ति शैत्यं वाऽद्भिर्विना अग्निरुष्णं विना वायुः स्पर्शं विना आकाशमवकाशं विना पृथिवी गन्धं विना, तद्वत् एतेन दृष्टान्तेन न्यायेन विना विशेषै-रविशेषैस्तन्मात्रैर्विना न तिष्ठति। अथ विशेषभूतान्युच्यन्ते, शरीरं पञ्चभूतमयम्,वैशेषिणा शरीरेण विना क्व लिङ्गस्यानं चेति क्व

एकदेहमुज्झति तदैवान्यमाश्रयति, निराश्रयम् आश्रयरहितम्, लिङ्गं त्रयोदशविधं करणमित्यर्थः ॥ ४१ ॥

किमर्थं? तदुच्यते—

**पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।**
**प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥**

पुरुषार्थः कर्तव्य इति प्रधानं प्रवर्तते, स च द्विविधः शब्दाद्युपलब्धिलक्षणो गुणपुरुषान्तरोपलब्धिलक्षणश्च, शब्दाद्युपलब्धिर्ब्रह्मादिषु लोकेषु गन्धादिभोगावाप्तिः (१), गुणपुरुषान्तरोपलब्धिर्मोक्ष इति, तस्मादुक्तं—पुरुषार्थहेतुकमिदं सूक्ष्मशरीरं प्रवर्तत इति । निमित्तनैमित्तिकप्रसङ्गेन, निमित्तं धर्मादि नैमित्तिकमूर्ध्वगमनादि पुरस्तादेव वक्ष्यामः, प्रसङ्गेन प्रसक्त्या प्रकृतेः प्रधानस्य विभुत्वयोगात्, यथा—राजा स्वराष्ट्रे विभुत्वाद् यद्यदिच्छति तत् तत् करोतीति, तथा प्रकृतेः सर्वत्र विभुत्वयोगान्निमित्तनैमित्तिकप्रसङ्गेन व्यवतिष्ठते पृथक् पृथग्देहधारणे लिङ्गस्य व्यवस्थां करोति । लिङ्गं सूक्ष्मैः परमाणुभिस्तन्मात्रैरुपचितं शरीरं त्रयोदशविधकरणोपेतं मानुषदेवतिर्यग्योनिषु व्यवतिष्ठते । कथम्? नटवत्, यथा—नटः पटान्तरेण प्रविश्य देवो भूत्वा निर्गच्छति पुनर्मानुषः पुनर्विदूषकः, एवं लिङ्गं निमित्तनैमित्तिकप्रसङ्गेनोदरान्तः प्रविश्य हस्ती स्त्री पुमान् भवति ॥ ४२ ॥

भावैरधिवासितं लिङ्गं संसरतीत्युक्तं, तत्र के भावा इत्याह—

**सांसिद्धिकाश्च भावाः प्राकृतिका वैकृतिताश्च धर्माद्याः ।**

---

(१) शब्दाद्युपलब्धिर्द्रव्यादिषु नो किंतु गन्धादिभ्यो व्याप्तिः, इति पा० ।

T

**दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥ ४३ ॥**

भावास्त्रिविधाश्चिन्त्यन्ते—सांसिद्धिकाः प्राकृता वैकृताश्च, तत्र सांसिद्धिका यथा—भगवतः कपिलस्यादिसर्गे उत्पद्यमानस्य चत्वारो भावाः सहोत्पन्ना धर्मो ज्ञानं वैराग्यमैश्वर्यमिति । प्राकृताः कथ्यन्ते,—ब्रह्मणश्चत्वारः पुत्राः सनकसनन्दनसनातनसनत्कुमारा बभूवुः, तेषाम् उत्पन्नकार्यकारणानां शरीरिणां षोडशवर्षाणामेते भावाश्चत्वारः समुत्पन्नाः, तस्मादेते प्राकृताः । तथा वैकृताः, यथा—आचार्यमूर्तिं निमित्तं कृत्वाऽस्मदादीनां ज्ञानमुत्पद्यते ज्ञानाद्वैराग्यं वैराग्याद्धर्मो धर्मादैश्वर्यमिति, आचार्यमूर्तिरपि विकृतिरिति, तस्माद्वैकृता एते भावा उच्यन्ते, यैरधिवासितं लिङ्गं संसरति । एते चत्वारो भावाः सात्त्विकाः, तामसा विपरीताः, सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तमित्यत्र व्याख्याताः । एवमष्टौ धर्मो ज्ञानं वैराग्यमैश्वर्यमधर्मोऽज्ञानमवैराग्यमनैश्वर्यमिति, अष्टौ भावाः क्व वर्तन्ते? दृष्टाः करणाश्रयिणः, बुद्धिः करणं तदाश्रयिणः, एतदुक्तं "अध्यवसायो बुद्धिर्धर्मो ज्ञानमिति" । कार्यं देहस्तदाश्रयाः कललाद्या ये मातृजा इत्युक्ताः, शुक्रशोणितसंयोगे विवृद्धिहेतुकाः कललाद्या बुद्बुदमांसपेशीप्रभृतयः, तथा कौमारयौवनस्थविरत्वादयो भावा अन्नपानरसनिमित्ता निष्पद्यन्ते, अतः कार्याश्रयिण उच्यन्ते, अन्नादिविषयभोगनिमित्ता जायन्ते ॥ ४३ ॥

निमित्तनैमित्तिकप्रसङ्गेनेति यदुक्तमत्रोच्यते—

**धर्मेण गमनमूर्ध्वं गमनमधस्ताद् भवत्यधर्मेण ।**
**ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥ ४४ ॥**

T

धर्मेण गमनमूर्ध्वम्, धर्मं निमित्तं कृत्वोर्ध्वमुपयाति, ऊर्ध्वमित्यष्टौ स्थानानि गृह्यन्ते, तद्यथा—ब्राह्मं प्राजापत्यं सौम्यमैन्द्रं गान्धर्वं याक्षं राक्षसं पैशाचमिति, तत् सूक्ष्मं शरीरं गच्छति । पशुमृगसरीसृपस्थावरान्तेष्वधर्मो निमित्तम् । किंच, ज्ञानेन चापवर्गः, अपवर्गश्च पञ्चविंशतितत्त्वज्ञानम्, तेन निमित्तेनापवर्गो मोक्षः, ततः सूक्ष्मं शरीरं निवर्तते, परमात्मा उच्यते । विपर्ययादिष्यते बन्धः, अज्ञानं निमित्तम्, स चैष नैमित्तिकः प्राकृतो वैकारिको दाक्षिणिकश्च बन्ध इति वक्ष्यति पुरस्तात्, यदिदमुक्तं "प्राकृतेन च बन्धेन तथा वैकारिकेण च । दाक्षिणेन तृतीयेन बद्धो नान्येन मुच्यते" ॥ ४४ ॥

तथान्यदपि निमित्तम्—

वैराग्यात् प्रकृतिलयः संसारो भवति राजसाद्रागात् ।
ऐश्वर्यादविघातो विपर्ययात् तद्विपर्यासः ॥ ४५ ॥

यथा कस्यचिद्वैराग्यमस्ति न तत्त्वज्ञानं तस्मादज्ञानपूर्वाद्वैराग्यात् प्रकृतिलयो मृतोऽष्टासु प्रकृतिषु प्रधानबुद्ध्यहंकारतन्मात्रेषु लीयते न मोक्षः, ततो भूयोऽपि संसरति, तथा योऽयं राजसो रागः, यजामि दक्षिणां ददामि येनामुष्मिन् लोकेऽत्र यद्दिव्यं मानुषं सुखमनुभवाम्येतस्माद्रागात् संसारो भवति । तथा ऐश्वर्यादविघातः, एतदैश्वर्यमष्टगुणमणिमादियुक्तं तस्मादैश्वर्यनिमित्तादविघातो नैमित्तिको भवति ब्रह्मादिषु स्थानेष्वैश्वर्यं न विहन्यते । किंचान्यत्, विपर्ययात्तद्विपर्यासः, तस्याविघातस्य विपर्यासो विघातो भवति, अनैश्वर्यात् सर्वत्र विहन्यते ॥ ४५ ॥

एष निमित्तैः सह नैमित्तिकः षोडशविधो व्याख्यातः,

स किमात्मक इत्याह—

**एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।**
**गुणवैषम्यविमर्दात् तस्य च भेदास्तु पञ्चाशत् ॥ ४६ ॥**

यथा एष षोडशविधो निमित्तनैमित्तिकभेदो व्याख्यात एष प्रत्ययसर्ग उच्यते, प्रत्ययो बुद्धिरित्युक्ता, अध्यवसायो बुद्धिर्धर्मो ज्ञानमित्यादि, स च प्रत्ययसर्गश्चतुर्धा भिद्यते विपर्ययाशक्तितुष्टिसिद्ध्याख्यभेदात् । तत्र संशयोऽज्ञानं विपर्ययः, यथा—कस्यचित् स्थाणुदर्शने स्थाणुरयं पुरुषो वेति संशयः । अशक्तिर्यथा—तमेव स्थाणुं सम्यग् दृष्ट्वा संशयं छेत्तुं न शक्नोतीत्यशक्तिः । एवं तृतीयस्तुष्ट्याख्यो यथा—तमेव स्थाणुं ज्ञातुं संशयितुं वा नेच्छति किमनेनास्माकमित्येषा तुष्टिः । चतुर्थः सिद्ध्याख्यो यथा—आनन्दितेन्द्रियः स्थाणुमारूढां वल्लिं पश्यति शकुनिं वा तस्य सिद्धिर्भवति स्थाणुरयमिति । एवमस्य चतुर्विधस्य प्रत्ययसर्गस्य गुणवैषम्यविमर्दात् तस्य भेदास्तु पञ्चाशत, योऽयं सत्त्वरजस्तमोगुणानां वैषम्यं विमर्दस्तेन तस्य प्रत्ययसर्गस्य पञ्चाशद्भेदा भवन्ति ॥ ४६ ॥

तथा क्वापि सत्त्वमुत्कटं भवति रजस्तमसी उदासीने क्वापि रजः क्वापि तम इति भेदाः कथ्यन्ते—

**पञ्च विपर्ययभेदा भवन्त्यशक्तिस्तु करणवैकल्यात् ।**
**अष्टाविंशतिभेदा तुष्टिर्नवधाष्टधा सिद्धिः ॥ ४७ ॥**

पञ्च विपर्ययभेदाः, ते यथा—तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति, एषां भेदानां नानात्वं वक्ष्यतेऽनन्तरमेवेति । अशक्तेस्त्वष्टाविंशतिभेदा भवन्ति करण

वैकल्यात् तानपि वक्ष्यामः । तथा तुष्टिर्नवधा, ऊर्ध्वं-स्रोतसि राजसानि ज्ञानानि । तथाष्टविधा सिद्धिः, सात्त्विकानि ज्ञानानि तत्रैवोर्ध्वस्रोतसि ॥ ४७ ॥

एतत् क्रमेणैव वक्ष्यते, तत्र विपर्ययभेदा उच्यन्ते—

**भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।**
**तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥ ४८ ॥**

तमसस्तावदष्टधा भेदः प्रलयोऽज्ञानादिभज्यते सोऽष्टासु प्रकृतिषु लीयते प्रधानबुद्ध्यहंकारपञ्चतन्मात्राख्यासु, तत्र लीनमात्मानं मन्यते मुक्तोऽहमिति तमोभेद एषः । अष्टविधस्य मोहस्य भेदोऽष्टविध एवेत्यर्थः, यत्राष्टगुणमणिमाद्यैश्वर्यं । तत्र सक्तादिन्द्रादयो देवा न मोक्षं प्राप्नुवन्ति पुनश्च तत्क्षये संसरन्त्येषोऽष्टविधो मोह इति । दशविधो महामोहः, शब्दस्पर्शरूपरसगन्धा देवानामेते पञ्च विषयाः सुखलक्षणाः, मानुषाणामप्येत एव शब्दादयः पञ्च विषयाः, एवमेतेषु दशसु महामोह इति । तामिस्रोऽष्टविधमैश्वर्यं दृष्टानुश्रविका विषया दश एतेषामष्टादशानां संपदमनुनन्दन्ति विपदं नानुमोदन्ते, एषोऽष्टादशविधो विकल्पस्तामिस्रः । यथा तामिस्रोऽष्टगुणमैश्वर्यं दृष्टानुश्रविका दश विषयास्तथा-न्धतामिस्रोऽप्यष्टादशभेद एव । किंतु विषयसंपत्तौ संभोग-काले य एव म्रियतेऽष्टगुणैश्वर्याद्वा भ्रश्यते ततस्तस्य महद्दुःखमुत्पद्यते सोऽन्धतामिस्र इति । एवं विपर्ययभेदा-स्तमःप्रभृतयः पञ्च प्रत्येकं भिद्यमाना द्विषष्टिभेदाः संवृत्ता इति ॥ ४८ ॥

अशक्तिभेदाः कथ्यन्ते—

**एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।**
**सप्तदशधा च बुद्धेर्विपर्ययात् तुष्टिसिद्धीनाम् ॥ ४९ ॥**

भवन्त्यशक्तेश्च करणवैकल्यादष्टाविंशतिभेदा(१) इत्युद्दिष्टम्, तत्र एकादशेन्द्रियवधाः, बाधिर्यमन्धता प्रसुप्तिरुपजिह्विका घ्राणपाको मूकता कुणित्वं खाञ्जचं गुदावर्तः क्लैब्यमुन्माद इति । सह बुद्धिवधैरशक्तिरुद्दिष्टा, ये बुद्धिवधास्तैः सहाशक्तेरष्टाविंशतिभेदा भवन्ति । सप्तदश वधा बुद्धेः, सप्तदश वधास्ते तुष्टिभेदसिद्धिभेदवैपरीत्येन, तुष्टिभेदा नव सिद्धिभेदा अष्टौ ये तद्विपरीतैः सह एकादशवधा एवमष्टाविंशतिविकल्पा अशक्तिरिति ॥ ४९ ॥

विपर्ययात् तुष्टिसिद्धीनामेव भेदक्रमो द्रष्टव्यः, तत्र तुष्टिर्नवधा कथ्यते—

**आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।**
**बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिमताः ॥ ५० ॥**

आध्यात्मिक्यश्चतस्रस्तुष्टयः, अध्यात्मनि भवा आध्यात्मिक्यः, ताश्च प्रकृत्युपादानकालभाग्याख्याः, तत्र प्रकृत्याख्या यथा—कश्चित् प्रकृतिं वेत्ति तस्याः सगुणनिर्गुणत्वं च, तेन तत्त्वं तत्कार्यं विज्ञायैव केवलं तुष्टस्तस्य नास्ति मोक्षः, एषा प्रकृत्याख्या । उपादानाख्या यथा—कश्चिदविज्ञायैव तत्त्वान्युपादानग्रहणं करोति त्रिदण्डकमण्डलुविविदिषाभ्यो

(१) पूर्वकारिकायामशक्तेरिति षष्ठ्यन्तोऽष्टाविंशतिभेदाः इति प्रथमाबहुवचनान्तश्च पाठ एतद्व्याख्यात्रभिमतः, पूर्वत्रापि तथैव व्याख्यातत्वात् ।

मोक्ष इति तस्यापि नास्ति मोक्ष इति, एषा उपादानाख्या। तथा कालाख्या—कालेन मोक्षो भविष्यतीति किं तत्त्वाभ्यासेनेत्येषा कालाख्या तुष्टिस्तस्य नास्ति मोक्ष इति। तथा भाग्याख्या—भाग्येनैव मोक्षो भविष्यतीति भाग्याख्या, चतुर्थी तुष्टिरिति। बाह्या विषयोपरमाच्च पञ्च, बाह्यास्तुष्टयः पञ्च विषयोपरमात्, शब्दस्पर्शरूपरसगन्धेभ्य उपरतोऽर्जनरक्षणक्षयसङ्गहिंसादर्शनात्, वृद्धिनिमित्तं पाशुपाल्यवाणिज्यप्रतिग्रहसेवाः कार्या एतदर्जनं दुःखम्, अर्जितानां रक्षणे दुःखम्, उपभोगात् क्षीयत इति क्षयदुःखम्, तथा विषयोपभोगसङ्गे कृते नास्तीन्द्रियाणामुपशम इति सङ्गदोषः, तथा न अनुपहत्य भूतान्युपभोग इत्येष हिंसादोषः, एवमर्जनादिदोषदर्शनात् पञ्चविषयोपरमात् पञ्च तुष्टयः। एवमाध्यात्मिकबाह्यभेदान्नव तुष्टयः, तासां नामानि शास्त्रान्तरे प्रोक्तानि,—"अम्भः सलिलमोघो वृष्टिः सुतमः पारं सुनेत्रं नारीकमनुत्तमाम्भसिकम्" इति, आसां तुष्टीनां विपरीता अशक्तिभेदाद् बुद्धिवधा भवन्ति, तद्यथा—अनम्भोऽसलिलमोघ इत्यादिवैपरीत्याद् बुद्धिवधा इति॥ ५०॥

सिद्धिरुच्यते—

**ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः।**
**दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः॥ ५१॥**

ऊहो यथा—कश्चिन्नित्यमूहते किमिह सत्यं किं परं किं नैःश्रेयसं किं कृत्वा कृतार्थः स्याम्, इति चिन्तयतो ज्ञानमुत्पद्यते प्रधानादन्य एव पुरुष इतोऽन्या बुद्धिरन्योऽहंकारोऽन्यानि तन्मात्राणीन्द्रियाणि पञ्च महाभूतानीत्येवं तत्त्व-

ज्ञानमुत्पद्यते येन मोक्षो भवति, एषा ऊहाख्या प्रथमा सिद्धिः । तथा शब्दज्ञानात् प्रधानपुरुषबुद्ध्यहंकारतन्मात्रेन्द्रियपञ्चमहाभूतविषयं ज्ञानं भवति ततो मोक्ष इति, एषा शब्दाख्या सिद्धिः । अध्ययनाद् वेदादिशास्त्राध्ययनात् पञ्चविंशतितत्त्वज्ञानं प्राप्यते मोक्षं याति इत्येषा तृतीया सिद्धिः । दुःखविघातत्रयम्, आध्यात्मिकाधिभौतिकाधिदैविकदुःखत्रयविघाताय गुरुं समुपगम्य तत उपदेशान्मोक्षं याति, एषा चतुर्थी सिद्धिः । एषैव दुःखत्रयभेदात् त्रिधा कल्पनीया इति षट् सिद्धयः । तथा सुहृत्प्राप्तिः, यथा—कश्चित् सुहृज्ज्ञानमधिगम्य मोक्षं गच्छति, एषा सप्तमी सिद्धिः । दानम्, यथा—कश्चिद् भगवतां प्रत्याश्रयौषधित्रिदण्डकुण्डिकादीनां ग्रासाच्छादनादीनां च दानेनोपकृत्य तेभ्यो ज्ञानमवाप्य मोक्षं याति, एषाष्टमी सिद्धिः । आसामष्टानां सिद्धीनां शास्त्रान्तरे संज्ञाः कृताः,—"तारं सुतारं तारतारं प्रमोदं प्रमुदितं प्रमोदमानं रम्यकं सदाप्रमुदितम्" इति, आसां विपर्ययाद् बुद्धेर्वधा ये विपरीतास्ते अशक्तौ निक्षिप्ताः, यथाऽतारमसुतारमतारतारमित्यादि द्रष्टव्यम् । अशक्तिभेदा अष्टाविंशतिरुक्तास्ते सह बुद्धिवधैरेकादशेन्द्रियवधा इति । तत्र तुष्टिविपर्यया नव, सिद्धीनां विपर्यया अष्टौ, एवमेते सप्तदश बुद्धिवधाः, एतैः सहेन्द्रियवधा अष्टाविंशतिरशक्तिभेदाः पश्चात् कथिता इति विपर्ययाशक्तितुष्टिसिद्धीनामेवोद्देशो निर्देशश्च कृत इति । किंचान्यत्, सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः, सिद्धेः पूर्वा या विपर्ययाशक्तितुष्टयस्ता एव सिद्धेरङ्कुशस्तद्भेदात्रिविधः, यथा—हस्ती गृहीताङ्कुशेन वश्यो भवति, एवं विपर्ययाशक्तितुष्टिभिः

स्त्रीवो लोकोऽज्ञानमाप्नोति, तस्मादेताः परित्यज्य सिद्धिः सेव्या, सिद्धेस्तत्त्वज्ञानमुत्पद्यते तस्मान्मोक्ष इति ॥ ५१ ॥

अथ यदुक्तं भावैरधिवासितं लिङ्गम्, तत्र भावा धर्मादयोऽष्टावुक्ता बुद्धिपरिणामाः, विपर्ययाशक्तितुष्टिसिद्धिपरिणताः, स भावाख्यः प्रत्ययसर्गो, लिङ्गं च तन्मात्रसर्गश्चतुर्दशभूतपर्यन्त उक्तः, तत्रैकेनैव सर्गेण पुरुषार्थसिद्धौ किमुभयविधसर्गेणेत्यत आह—

न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।
लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः ॥ ५२ ॥

भावैः प्रत्ययसर्गैर्विना लिङ्गं न तन्मात्रसर्गो न, पूर्वपूर्वसंस्कारादृष्टकारितत्वादुत्तरोत्तरदेहलाभस्य, लिङ्गेन तन्मात्रसर्गेण च विना भावनिर्वृत्तिर्न स्थूलसूक्ष्मदेहसाध्यत्वाद्धर्मादेः, अनादित्वाच्च सर्गस्य बीजाङ्कुरवदन्योन्याश्रयो न दोषाय तत्तज्जातीयापेक्षित्वेऽपि तत्तद्व्यक्तीनां परस्परानपेक्षित्वात्, तस्माद्भावाख्यो लिङ्गाख्यश्च द्विविधः प्रवर्तते सर्ग इति ॥ ५२ ॥

किंचान्यत्—

अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥ ५३ ॥

तत्र दैवमष्टप्रकारं, ब्राह्मं प्राजापत्यं सौम्यं ऐन्द्रं गान्धर्वं याक्षं राक्षसं पैशाचं इति । पशुमृगपक्षिसरीसृपस्थावराणि भूतान्येवं पञ्चविधस्तैरश्चः । मानुषयोनिरेकैव । इति चतुर्दश भूतानि ॥ ५३ ॥

त्रिष्वपि लोकेषु गुणत्रयमस्ति, तत्र कस्मिन् किमधिकमित्युच्यते—

**ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।**
**मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥**

ऊर्ध्वमिति, अष्टसु देवस्थानेषु सत्त्वविशालः सत्त्वविस्तारः सत्त्वोत्कट ऊर्ध्वसत्त्व इति, तत्रापि रजस्तमसी स्तः । तमोविशालो मूलतः, पश्वादिषु स्थावरान्तेषु सर्वः सर्गस्तमसाधिक्येन व्याप्तः, तत्रापि सत्त्वरजसी स्तः । मध्ये मानुषे रज उत्कटम्, तत्रापि सत्त्वतमसी विद्येते, तस्मात् दुःखप्राया मनुष्याः, एवं ब्रह्मादिस्तम्बपर्यन्तः, ब्रह्मादिस्थावरान्त इत्यर्थः, एवमभौतिकः सर्गो लिङ्गसर्गो भावसर्गो भूतसर्गो दैवमानुषतैर्यग्योना इति, एष प्रधानकृतः षोडशविधः सर्गः ॥ ५४ ॥

**तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।**
**लिङ्गस्याविनिवृत्तेस्तस्मात् दुःखं स्वभावेन ॥ ५५ ॥**

तत्रेति, तेषु देवमानुषतिर्यग्योनिषु जराकृतं मरणकृतं चैव दुःखं चेतनः चैतन्यवान् पुरुषः प्राप्नोति, न प्रधानं न बुद्धिर्नाहंकारो न तन्मात्राणीन्द्रियाणि महाभूतानि च । कियन्तं कालं पुरुषो दुःखं प्राप्नोतीति तद्विविनक्ति—लिङ्गस्याविनिवृत्तेरिति, यत् तन्महदादि लिङ्गशरीरेणाविश्य तत्र व्यक्तीभवति, तद्यावन्न निवर्तते संसारशरीरमिति तावत् संक्षेपेण त्रिषु स्थानेषु पुरुषो जरामरणकृतं दुःखं प्राप्नोति, लिङ्गस्याविनिवृत्तेः, लिङ्गस्य विनिवृत्तिं यावत्, लिङ्गनिवृत्तौ मोक्षो

मोक्षप्राप्तौ नास्ति दुःखं इति । तत् पुनः केन निवर्तते? यदा पञ्चविंशतितत्त्वज्ञानं स्यात् सत्त्वपुरुषान्यथाख्यातिलक्षणम्, इदं प्रधानमियं बुद्धिरयमहंकार इमानि पञ्च तन्मात्राण्येकादशेन्द्रियाणि पञ्च महाभूतानि येभ्योऽन्यः पुरुषो विसदृश इत्येवं ज्ञानाल्लिङ्गनिवृत्तिस्ततो मोक्ष इति ॥ ५५ ॥

प्रकृतेः किंनिमित्त आरम्भ इत्युच्यते—

**इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।**
**प्रतिपुरुषविमोक्षार्थं स्वार्थं इव परार्थं आरम्भः ॥ ५६ ॥**

इत्येष परिसमाप्तौ निर्देशे च, प्रकृतिकृतौ(१) प्रकृतिकरणे प्रकृतिक्रियायां य आरम्भो महदादिविशेषभूतपर्यन्तः, प्रकृतेर्महान् महतोऽहंकारस्तस्मात् तन्मात्राण्येकादशेन्द्रियाणि तन्मात्रेभ्यः पञ्च महाभूतानीत्येष प्रतिपुरुषविमोक्षार्थं पुरुषं पुरुषं प्रति देवमनुष्यतिर्यग्भावं गतानां विमोक्षार्थमारम्भः, कथम्? स्वार्थ इव परार्थ आरम्भः, यथा कश्चित् स्वार्थं त्यक्त्वा मित्रकार्याणि करोति, एवं प्रधानम्, पुरुषोऽत्र प्रधानस्य न किंचित् प्रत्युपकारं करोति, स्वार्थं इव न च स्वार्थः परार्थ एव, अर्थः शब्दादिविषयोपलब्धिर्गुणपुरुषान्तरोपलब्धिश्च, त्रिषु लोकेषु शब्दादिविषयैः पुरुषः योजयितव्या अन्ते च मोक्षेणेति प्रधानस्य प्रवृत्तिः, तथा चोक्तम्, "कुम्भवत् प्रधानं पुरुषार्थं कृत्वा निवर्तते" इति ॥ ५६ ॥

अत्रोच्यतेऽचेतनं प्रधानं चेतनः पुरुष इति मया त्रिषु लोकेषु शब्दादिभिर्विषयैः पुरुषो योज्योऽन्ते मोक्षः कर्तव्य

(१) एतन्मते प्रकृतिकृतौ इति सप्तम्यन्तः पाठः ।

इति कथं चेतनवत् प्रवृत्तिः? सत्यम्, किंत्वचेतनानामपि प्रवृत्तिर्दृष्टा निवृत्तिश्च यस्मादित्याह—

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥

यथा—तृणोदकं गवा भक्षितं क्षीरभावेन परिणम्य वत्सविवृद्धिं करोति पुष्टे च वत्से निवर्तते, एवं पुरुषविमोक्षनिमित्तं प्रधानम् इति अज्ञस्य प्रवृत्तिरिति ॥ ५७ ॥

किंच—

औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।
पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥

यथा लोके इष्टौत्सुक्ये सति तस्य निवृत्त्यर्थं क्रियासु प्रवर्तते गमनागमनक्रियासु कृतकार्यो निवर्तते, तथा पुरुषस्य विमोक्षार्थं शब्दादिविषयोपभोगोपलब्धिलक्षणं गुणपुरुषान्तरोपलब्धिलक्षणं च द्विविधमपि पुरुषार्थं कृत्वा प्रधानं निवर्तते ॥ ५८ ॥

किंचान्यत्—

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥

यथा—नर्तकी शृङ्गारादिरसैः इतिहासादिभावैश्च निबद्धगीतवादित्रनृत्यानि रङ्गस्य दर्शयित्वा कृतकार्या नृत्यान्निवर्तते, तथा प्रकृतिरपि पुरुषस्यात्मानं प्रकाश्य बुद्ध्यहंकारतन्मात्रेन्द्रियमहाभूतभेदेन विनिवर्तते ॥ ५९ ॥

कथं को वास्या निवर्तको हेतुः? तदाह—

नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति ॥ ६० ॥

नानाविधैरुपायैः प्रकृतिः पुरुषस्योपकारिण्यनुपकारिणः पुंसः, कथम्? देवमानुषतिर्यग्भावेन सुखदुःखमोहात्मकभावेन शब्दादिविषयभावेन, एवं नानाविधैरुपायैरात्मानं प्रकाश्याहमन्या त्वमन्य इति निवर्तते, अतो नित्यस्य तस्यार्थमपार्थकं चरति कुरुते, यथा—कश्चित् परोपकारी सर्वस्योपकुरुते नात्मनः प्रत्युपकारमीहते, एवं प्रकृतिः पुरुषार्थं चरति करोत्यपार्थकं, पश्चादुक्तमात्मानं प्रकाश्य निवर्तते ॥ ६० ॥

निवृत्ता च किं करोतीत्याह—

प्रकृतेः सुकुमारतरं न किंचिदस्तीति मे मतिर्भवति ।
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥

लोके प्रकृतेः सुकुमारतरं न किंचिदस्तीत्येवं मे मतिर्भवति, येन परार्थं एवं मतिरुत्पन्ना । कस्मात्? अहमनेन पुरुषेण दृष्टास्मीत्यस्य पुंसः पुनर्दर्शनं नोपैति, पुरुषस्यादर्शनमुपयातीत्यर्थः । तत्र सुकुमारतरं वर्णयति,—केचिदीश्वरं कारणं ब्रुवते, "अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत् स्वर्गं नरकमेव वा" ॥ अपरे स्वभावकारणिका ब्रुवते, "केन शुक्लीकृता हंसा मयूराः केन चित्रिताः । स्वभावेनैव" इति । अत्र सांख्याचार्या आहुः—"निर्गुणत्वादीश्वरस्य कथं सगुणतः प्रजा जायेरन्? कथं वा पुरुषान्निर्गुणादेव? तस्मात् प्रकृतेर्युज्यते, यथा—शुक्लेभ्यस्तन्तुभ्यः शुक्ल

एव पटो भवति कृष्णेभ्यः कृष्ण एव" इति । एवं त्रिगुणात् प्रधानात् त्रयो लोकास्त्रिगुणाः समुत्पन्ना इति गम्यते, निर्गुण ईश्वरः, सगुणानां लोकानां तस्मादुत्पत्तिरयुक्तेति । अनेन पुरुषो व्याख्यातः, तथा केषांचित् कालः कारणमिति, उक्तं च—"कालः पचति भूतानि कालः संहरते जगत् । कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः" ॥ व्यक्ताव्यक्तपुरुषास्त्रयः पदार्थाः, तेन कालोऽन्तर्भूतोऽस्ति, स हि व्यक्तः, सर्वकर्तृत्वात् कालस्यापि प्रधानमेव कारणम्, स्वभावोऽप्यत्रैव लीनः, तस्मात् कालो न कारणं, नापि स्वभाव इति, तस्मात् प्रकृतिरेव कारणं न प्रकृतेः कारणान्तरमस्तीति न पुनर्दर्शनमुपयाति पुरुषस्य, अतः प्रकृतेः सुकुमारतरं सुभोग्यतरं न किंचिदीश्वरादि कारणमस्तीति मे मतिर्भवति, तथा च लोके रूढम् ॥ ६१ ॥

पुरुषो मुक्तः, पुरुषः संसारी, इति चोदिते(१) आह—

तस्मान्न बध्यते नापि(२) मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥

तस्मात् कारणात् पुरुषो न बध्यते नापि मुच्यते नापि संसरति, यस्मात् कारणात् प्रकृतिरेव नानाश्रया दैवमानुषतिर्यग्योन्याश्रया बुद्ध्यहंकारतन्मात्रेन्द्रियभूतस्वरूपेण बध्यते मुच्यते संसरति चेति । अथ मुक्त एव स्वभावात् स सर्वगतश्च कथं संसरति ? अप्राप्तप्रापणार्थं संसरणमिति, तेन पुरुषो

(१) नोदिते इति पाठान्तरम् ।
(२) ऽद्धा न इति पाठान्तरम् ।

बध्यते पुरुषो मुच्यते पुरुषः संसरतीति व्यपदिश्यते येन संसारित्वं विद्यते, सत्त्वपुरुषान्तरज्ञानात् तत्त्वं पुरुषस्याभिव्यज्यते, तदभिव्यक्तौ केवलः शुद्धो मुक्तः स्वरूपप्रतिष्ठः पुरुष इति, अत्र यदि पुरुषस्य बन्धो नास्ति ततो मोक्षोऽपि नास्ति, अत्रोच्यते—प्रकृतिरेवात्मानं बध्नाति मोचयति च, यत्र सूक्ष्मशरीरं तन्मात्रकं त्रिविधकरणोपेतं तत् त्रिविधेन बन्धेन बध्यते, उक्तं च,—"प्राकृतेन च बन्धेन तथा वैकारिकेण च । दाक्षिणेन तृतीयेन बद्धो नान्येन मुच्यते" ॥ तत् सूक्ष्मं शरीरं धर्माधर्मसंयुक्तम् ॥ ६२ ॥

प्रकृतिश्च बध्यते प्रकृतिश्च मुच्यते, संसरतीति कथम्? तदुच्यते—

रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥

रूपैः सप्तभिरेव, एतानि सप्त प्रोच्यन्ते, धर्मो वैराग्यमैश्वर्यमधर्मोऽज्ञानमवैराग्यमनैश्वर्यम्, एतानि प्रकृतेः सप्त रूपाणि, तैरात्मानं स्वं बध्नाति प्रकृतिः, आत्मना स्वेनैव, सैव प्रकृतिः पुरुषस्यार्थः पुरुषार्थः कर्तव्य इति विमोचयति आत्मानमेकरूपेण ज्ञानेन ॥ ६३ ॥

कथं तज्ज्ञानमुत्पद्यते?—

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥

एवमुक्तेन क्रमेण पञ्चविंशतितत्त्वालोचनाभ्यासादियं प्रकृतिरयं पुरुष एतानि पञ्चतन्मात्रेन्द्रियमहाभूतानीति पुरुषस्य ज्ञानमुत्पद्यते, नास्मि नाहमेव भवामि, न मे मम शरीरं

तत्, यतोऽहमन्यः शरीरमन्यत्, नाहमिति, अपरिशेषम्, अहङ्काररहितम् अविपर्ययाद्विशुद्धम्, विपर्ययः संशयोऽविपर्ययादसंशयाद्विशुद्धं केवलं तदेव नान्यदस्तीति मोक्षकारणमुत्पद्यतेऽभिव्यज्यते ज्ञानं पञ्चविंशतितत्त्वज्ञानं पुरुषस्येति ॥ ६४ ॥

ज्ञाने पुरुषः किं करोति?—

**तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम् ।**
**प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः ॥ ६५ ॥**

तेन विशुद्धेन केवलज्ञानेन पुरुषः प्रकृतिं पश्यति प्रेक्षकवत् प्रेक्षकेण तुल्यमवस्थितः स्वस्थः, यथा—रङ्गप्रेक्षकोऽवस्थितो नर्तकीं पश्यति, स्वस्थः—स्वस्मिंस्तिष्ठति स्वस्थः स्वस्थानस्थितः । कथंभूतां प्रकृतिम्, निवृत्तप्रसवां निवृत्तबुद्ध्यहंकारकार्याम्, अर्थवशात् सप्तरूपविनिवृत्ताम्, निवर्तितपुरुषोभयप्रयोजनवशात् यैः सप्तभिः रूपैर्धर्मादिभिरात्मानं बध्नाति तेभ्यः सप्तभ्यो रूपेभ्यो विनिवृत्तां प्रकृतिं पश्यति ॥ ६५ ॥

किंच—

**दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युपरमत्यन्या(१) ।**
**सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ ६६ ॥**

रङ्गस्थ इति यथा रङ्गस्थ इत्येवमुपेक्षक एकः केवलः शुद्धः पुरुषस्तेनाहं दृष्टेति कृत्वा उपरता निवृत्ता, एका एकैव प्रकृतिः त्रैलोक्यस्यापि प्रधानकारणभूता न द्वितीया प्रकृतिरस्ति मूर्तिभेदे जातिभेदात्, एवं प्रकृतिपुरुषयोर्निवृत्तावपि

(१) एतन्मते—मित्युपरमत्येका इति पाठः ।

व्यापकत्वात् संयोगोऽस्ति न तु संयोगात् कृतः सर्गो भवति । सति संयोगेऽपि तयोः, प्रकृतिपुरुषयोः सर्वगतत्वात् सत्यपि संयोगे, प्रयोजनं नास्ति सर्गस्य सृष्टेः चरितार्थत्वात्, प्रकृतेर्द्विविधं प्रयोजनं शब्दविषयोपलब्धिर्गुणपुरुषान्तरोपलब्धिश्च, उभयत्रापि चरितार्थत्वात् सर्गस्य नास्ति प्रयोजनं यः पुनः सर्गं इति, यथा—दानग्रहणनिमित्त उत्तमर्णाधमर्णयोर्द्रव्य-विशुद्धौ सत्यपि संयोगे न कश्चिदर्थसंबन्धो भवति, एवं प्रकृतिपुरुषयोरपि नास्ति प्रयोजनमिति ॥ ६६ ॥

यदि पुरुषस्योत्पन्ने ज्ञाने मोक्षो भवति ततो मम कस्मान्न भवति? इत्यत उच्यते—

सम्यग्ज्ञानाधिगमाद् धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमिवद् धृतशरीरः ॥ ६७ ॥

यद्यपि पञ्चविंशतितत्त्वज्ञानं भवति तथापि संस्कारवशादेष-तशरीरो योगी तिष्ठति, कथम्? चक्रभ्रमवच्चक्रभ्रमेण तुल्यम्, यथा—कुलालश्चक्रं भ्रमयित्वा घटं करोति मृत्पिण्डं चक्रमारोप्य पुनः कृत्वा घटं पर्यवसृजति चक्रं भ्रमत्येव संस्कारवशात्, एवं सम्यग्ज्ञानाधिगमात् उत्पन्नसम्यग्ज्ञानस्य धर्मादीनामकारण-प्राप्तौ एतानि सप्त रूपाणि बन्धनभूतानि सम्यग्ज्ञानेन दग्धानि, यथा नाग्निना दग्धानि बीजानि प्ररोहणसमर्थानि, एवमेतानि धर्मादीनि बन्धनानि न समर्थानि । धर्मादीनामकारणप्राप्तौ संस्कारवशाद् धृतशरीरस्तिष्ठति, ज्ञानाद्वर्तमानधर्माधर्मक्षयः कस्मान्न भवति, वर्तमानत्वादेव, क्षणान्तरे क्षयमप्येति, ज्ञानं त्वना-

गतं कर्म दहति, वर्तमानशरीरेण च यत् करोति तदपीति, विहितानुष्ठानकरणादिति, संस्कारक्षयाच्छरीरपाते मोक्षः ॥ ६७ ॥

स किंविशिष्टो भवतीत्युच्यते—

प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥

धर्माधर्मजनितसंस्कारक्षयात् प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानस्य निवृत्तौ ऐकान्तिकमवश्यं आत्यन्तिकमनन्तर्हितं कैवल्यं केवलभावान्मोक्ष उभयमैकान्तिकात्यन्तिकमित्येवंविशिष्टं कैवल्यमाप्नोति ॥ ६८ ॥

पुरुषार्थं ज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥

पुरुषार्थो मोक्षस्तदर्थं ज्ञानमिदं गुह्यं रहस्यं परमर्षिणा श्रीकपिलर्षिणा समाख्यातं सम्यगुक्तम्, यत्र ज्ञाने भूतानां वैकारिकाणां स्थित्युत्पत्तिप्रलया अवस्थानाविर्भावतिरोभावाः चिन्त्यन्ते विचार्यन्ते, येषां विचारात् सम्यक् पञ्चविंशतितत्त्वविवेचनात्मिका संपद्यते संवित्तिरिति ॥ ६९ ॥

एतत् पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम् ॥ ७० ॥

शिष्यपरंपरयागतमीश्वरकृष्णेन चैतदार्याभिः ।
संक्षिप्तमार्यमतिना सम्यग् विज्ञाय सिद्धान्तम् (१) ॥ ७१ ॥

---

(१) राद्धान्तम् इति पा० ।

सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ ७२ ॥

इति सांख्यकारिका समाप्ता ।

सांख्यं कपिलमुनिना प्रोक्तं संसारविमुक्तिकारणं हि ।
यत्रैताः सप्ततिरार्या भाष्यं चात्र गौडपादकृतम् (१) ॥

इति गौडपादव्याख्या समाप्ता ।

---

(१) एतत् पद्यं केनचिल्लेखकादिना निर्मायोपाक्षिप्तम्, न ग्रन्थकृन्निर्मितम्, आर्यादिष्वनन्तर्भावादिति ।



Printed by Krishna Das Gupta Proprietor, at the
Benares Printing Press.

# सूचीपत्रम्



इनके अतिरिक्त अनेक प्रकार की संस्कृत आदि पुस्तकें हमारे यहां मिलती हैं जिनको अपेक्षित हों पत्र व्यवहार करें।

कृष्णदासगुप्त
४०।५ ठठेरी बाजार
बनारस सिटी।